THE

HARIDAS SANSKRIT SERIES

175

# PRABANDHA PĀRIJĀTA

( A Collection of Sanskrit Essays )

By

ACHARYA RAMACHANDRA MISHRA

Prof. D. S. S. College, Muzaffarpur.

THE

Chowkhamba Sanskrit Series Office

VARANASI-1

1976

# भूमिका

मान्याः सज्जनाः,

प्रतिदिनं परिवर्त्तमानस्य कालचक्रस्य प्रवाहेण सर्वत्र परिवर्त्तनं विधीयत
इति शिक्षाक्षेत्रेऽपि सम्प्रति परिवर्त्तनं प्रक्रान्तम् । 'पुरा यथा कस्यचिदेकस्य
शास्त्रस्य सर्वाङ्गीणमध्ययनं विधाय कृतित्वमाकलयन्ति स्म विद्वांसः, सम्प्रद्य-
मानेऽपि तादृशेऽध्ययनेऽधुना न कार्यं चलति । पाश्चात्त्यशिक्षाया अबाधेन
प्रसरेण लोकानां दृष्टिरेव तथा विपरीता जाता, यथा सर्वेऽपि प्राचीना व्यव-
हारा अनुपयुज्यमाना इव प्रतिभासन्ते । सङ्घर्षस्य युगे सर्वत्रापि कर्मणि
प्राच्यनव्यप्रवाहयोः सङ्क्रमेण नृसिंहाकृतिरेको नवः प्रकारः प्रकटति, एवमेवा-
त्रापि विषये वक्तुमुचितम् । किञ्च सम्प्रतिपद्यन्ते जनाः परीक्षयैव शिक्षाया
परिमाणम्, परीक्षायां साफल्यं च यावतांशेन विषयज्ञानमपेक्षते, न ततो
न्यूनया मात्रया लेखपाटवम् । विचार्यताम्—यस्मिन् समये परीक्षकाः केवल-
मुत्तरपत्राणि दृष्ट्वैव परीक्ष्याणां योग्यताया निर्धारणं कुर्वते, तस्मिन् समये
लेखशक्तिः कियदुपकुर्यादिति । इदमेवानुसन्धाय परीक्षापाठ्यग्रन्थनिर्धारणा-
धिकारिणोऽपि प्रथमायां परीक्षायामनुवादेन मध्यमायामनुवादेन सहैव प्रबन्ध-
लेखमपि विषयत्वेन निरचैषुः । शास्त्र्याचार्यपरीक्षयोरपि क्वचित् क्वचित्
प्रबन्धविषयाः प्रश्ना भवन्ति । न तानसमाधाय परीक्षोदधिपारगमनं, शक्य-
विधानं, तदर्थमयं सकलः शिक्षासोपानाधिरोहक्रमः । कतिपये छात्रा एता-
दृशा अपि पुराऽभूवन्, ये जातिविशेषाभ्यासेनैव प्रबन्धादिलेखकलायां पाटवम-
लभन्त, शास्त्रीयग्रन्थचयनेनोद्भूतप्रश्नव्युत्पत्तिमत्त्वात् । परं गतानि
तानि दिनानि, सम्प्रति तु मध्यमावर्गीयाश्छात्राः प्रबन्धं स्वयं लिखेयुरिति नाशा-
स्थानम् । शास्त्र्याचार्यवर्गीयाणामपि भूयांसो यथोचितप्रबन्धलेखपाट

नाकलयन्तीति दृष्ट्वा व्यथते मानसम् । अस्यां स्थितावेकं प्रबन्धविषयकमीदृशं पुस्तकमपेक्ष्यते, यत्रैकत्रैव प्रबन्धलेखनशैली, तदन्तरङ्गपरिचयप्रदानविषया बहवो नियमोपनियमाः, कतिपयादर्शप्रबन्धाः, प्रबन्धोपयोगिसूक्तिसमुदयाश्च समुपलभ्येरन्, इत्यन्तरभिलाषं बहूनां सुहृदां पुरस्तादुपास्थापयं कतिचन तद्योग्यताशालिनो विधिवदन्वरुन्धं च । परं सर्वैरुदासितमेव । एतादृशपुस्तकदर्शनाभिलाषः । पुनर्मन्दतां नागमत् । व्यतीतेषु कतिषुचन वर्षेषु सर्वतो निराशीभूय स्वयमेवेदं पुस्तकं 'प्रबन्धपारिजात' संज्ञया प्रथयिष्यमाणं प्राक्रमे । फलं तस्य भवतां करकमलेषु समुपहृतमिदमिति ।

एतस्य पुस्तकस्य निर्माणात्पूर्वं यावन्ति प्रबन्धविषयाणि पुस्तकानि मया निरीक्षितानि, तेषु कस्यापि मध्यमावर्गीयच्छात्रावगतियोग्यभाषानिबद्धता, परीक्षोपयोगिप्रबन्धपूर्णतां, छात्राः स्वयं प्रबन्ध लिखितुं कथं शिक्षिताः स्युरिति चिन्ता च मया न दृष्टा, प्रत्युतैकत्र जातककथामालायाः कतिपयेऽध्यायाः सुरभारतीसम्मेलनसभापतीनां भाषणानि, क्वचिच्च दीर्घदीर्घैः समासैर्मात्राविन्दुविसर्गांशेऽपि नवीनतामस्पृशद्भिः शब्दस्तोमैर्विचारवर्त्म परित्यज्य प्रमाणपारतन्त्र्यपुरस्कारैश्च समुपबृंहिता एव निबन्धा वाऽदृश्यन्त, किमस्मिन्नपि युगे—यत्र पाश्चात्त्यशिक्षाप्रियस्नेहगर्वितेव सपत्नी सह चलन्ती संस्कृतभाषाया गतिविधिं सतर्कया दोषमात्रगवेषणव्यापृतया च दृशा पश्यति, समुचितमीदृशनिबन्धग्रन्थानालम्ब्य विश्रमितुम् ?—ईदृशीं वा निबन्धलेखनयोग्यतामाश्रित्य शिक्षासमाप्तिं मन्यमानानां छात्राणां स्कन्धेषु संस्कृतसरस्वत्याः, संस्कृतेश्च भारतीयाया रक्षाया भारमर्पयितुं कथं विद्वांसोऽभिलष्येयुः ? अतो यथासम्भवं सावधानतया प्रबन्धपारिजातमिमं छात्राणां सर्वात्मनोपकारकारिणं विधातुं प्रयासमाशिश्रियम्, तथाहि-प्रथमे पल्लवे प्रबन्धलेखनोपयोगिनः कतिपये सिद्धान्तास्तत्साफल्योपायाश्च प्रदर्शिताः, यैर्मनसि कृतैः स्वयमूहमानाः प्रबन्धतनुं कल्प-

येर्युर्विद्यार्थिनः, द्वितीये पल्लवे यथाप्रथमपल्लवप्रदर्शितपथं कतिचनादर्शप्रबन्धा लिखित्वा समुपन्यस्ताः, येन ते तानवलोक्यैव मनसि प्रबन्धलेखशैलीं साकारामिव भावयेयुः, भाषाप्रयोगादिविषये च शिक्ष्येरन्, तृतीये पल्लवे प्रबन्धरचनाया अलघूपादेये पत्रलेखनविधौ छात्राणां प्रवेशं कामयमानेन पत्रप्रबोधाध्यायोपि समुपनिबद्धो येन सकृद्दृक्पातपात्रतां नीयमानेन पत्रविषयकं रहस्यं स्फुटावभासतां समुपेयात्। चतुर्थे चरमे च पल्लवे सूक्तिनिवहा लौकिकन्यायाश्च संगृह्य सन्दृब्धाः (सति चावश्यकत्वे) टिप्पण्यां तदर्थाश्च लिखिताः। तदियता परिकरेण प्रस्तूयमानं 'प्रबन्धपारिजातं' प्रकाशमासादयन्तं दयालवो विद्वांसो निरतिशयस्नेहशालिनो बान्धवो विद्यार्थिनश्च यद्येकदापि सापेक्षया दृशा पावयेयुस्तद्भूवैरुपकारैरात्मानं फलभाजं च कुर्युस्तदा कृतित्वभाग् भवेयम्।

येषां ग्रन्थानां सहायतया निबन्धोऽयं मया समुपनिबद्धस्तेषां लेखकानां मान्यानामुपदेशप्रदानां श्रद्धेयगुरुपादानां चोपकारभारमनतिश्रमसम्पाद्य— धन्यवादप्रदानमात्रेणाशोध्यं मन्यमानस्तत्सन्दानिततयाऽवस्थानमेवाहं स्वपक्षे हितमुत्प्रेक्षे।

(संस्कृत कालेज)
मुजफ्फरपुरम्
सं. २००५

विदुषामाश्रवः
**श्रीरामचन्द्रमिश्रः**

# विषय-सूची


| विषयाः | पृष्ठ० |
|---|---|
| **प्रथमपल्लवे—** | |
| १ मङ्गलाचरणम् | १ |
| २ प्रबन्ध-परिचयः | २ |
| ३ प्रबन्धरचनाविषयेऽवश्यध्येया नियमाः | ३ |
| ४ लेखनमात्रे साधारणनियमाः | ७ |
| ५ वाच्यपरिवर्त्तनम् | ९ |
| ६ चिह्नप्रकरणम् | १० |
| ७ प्रबन्धलेखकलामध्यापयद्भिर्ध्येया विषयाः | १४ |
| ८ वर्णनीया विषयाः | १५ |
| ९ प्रबन्धभेदादिकथा | २१ |
| **द्वितीय पल्लवे—** | |
| १ ग्राम्यपाठशाला | २३ |
| २ समाचारपत्राणि | २५ |
| ३ मुद्रणकला | २७ |
| ४ परोपकारः | २९ |
| ५ एकता | ३१ |
| ६ आवश्यकताऽऽविष्काराणां जननी भवति | ३२ |
| ७ व्यापारः | ३५ |
| ८ अनुशासनम् | ३७ |
| ९ न संशयमनारुह्य नरो भद्राणि पश्यति | ३९ |
| १० वीरता | ४१ |
| ११ नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण | ४३ |
| १२ अतिपरिचयादवज्ञा | ४६ |
| १३ सत्यवादिता | ४८ |
| १४ आत्मसंयमः | ५० |
| १५ जातिव्यवस्था | ५२ |
| १६ भूकम्पः | ५५ |
| १७ विद्या | ५७ |
| १८ मितव्ययशीलता | ५९ |
| १९ व्यायामः | ६२ |
| २० औद्योगिकशिक्षा | ६५ |
| २१ देशाटनम् | ६७ |
| २२ स्वतन्त्रता | ६९ |
| २३ आशा | ७१ |
| २४ स्त्रीशिक्षा | ७३ |
| २५ लोभः पापस्य कारणम् | ७५ |
| २६ कर्त्तव्यपालनम् | ७७ |
| २७ देशभक्तिः | ७८ |
| २८ पितृभक्तिः | ८१ |
| २९ अतिथिसेवा | ८३ |

३० उद्योगिनंपु रुषसिंहमुपैति लक्ष्मीः ८५
३१ सञ्चयी नावसीदति ८७

वर्णनात्मकाः प्रबन्धाः

१ तीर्थयात्रा ८९
२ नौकाविहारः ९१
३ धूमशकट ( रेल ) यात्रा ९४
४ दीपावली ९७
५ भारतीयसभ्यता ९९
६ संस्कृतसंरक्षणोपायाः १०१
७ महात्मा गांधी १०४
८ पं० जवाहरलाल नेहरू १०७
९ देशरत्न-राजेन्द्रप्रसादः ११०
१० आचार्य-विनोबाभावे ११२
११ महात्मा बुद्धः ११५
१२ ध्वनिवाहकयन्त्रम् ११७
१३ गङ्गा ११९
१४ मिथिला १२३

तृतीयपल्लवे—

१ पत्रलेखनप्रकारः (सादर्शः) १२८

चतुर्थपल्लवे—

१ सूक्तिरत्नमाला १३९
२ सुभाषितगद्यावली १४५
३ सुभाषितपद्यावली १४९

पञ्चमपल्लवे—

१ लौकिकन्यायमञ्जरी १५५
२ ग्रन्थकर्तुः परिचयः १६०



॥ श्रीः ॥

# प्रबन्ध-पारिजातः

## प्रथमः पल्लवः

### ❀ मङ्गलाचरणम् ❀

स्फीतावतंसशशिसङ्कुचदङ्गसङ्गि-
रोमाञ्चसञ्चयमिषेण समुन्मिषन्तम् ।
गौरीकरग्रहमिलन्नववारिधारा-
सिक्तं स्मरामि गिरिशप्रणयप्ररोहम् ॥ १ ॥

राधासविभ्रमदृगन्तनिपातजात-
पत्रं प्रमोदकुसुमालिभिरुल्लसन्तम् ।
कूले कलिन्ददुहितुस्ततकेलिशाखं,
कृष्णानुरागतरुमादरतः प्रपद्ये ॥ २ ॥

वाणि ! प्रसीद करवाणि तव प्रसादान्-
नव्यं 'प्रबन्ध' विषयं रुचिरं निबन्धम् ।
भूयास्तथा मम सखि ! प्रतिभे ! सहाया,
स्वाराधयानि विबुधानमुना यथाऽहम् ॥ ३ ॥

कालानुकूलविविधाध्वविभिन्नशिक्षा-
कक्षासु ये विषयतां गमिताः प्रबन्धाः ।
विद्यार्थिनां तदवबोधसमृद्धयेऽस्य-
मालम्बितो भवतु मे सफलः प्रयासः ॥ ४ ॥

प्राचीनान्प्रथितान्प्रबन्धविषयानन्यासु भाषास्वपि,
प्रौढैः पण्डितमण्डलैर्विरचितानत्यादरादीक्षितान् ।
कृत्वा हृद्यतम निबन्धघटना-योग्यं च सारं ततो
निष्कृष्यारचि देववाचि रुचिरो ग्रन्थो मयाऽयं लघुः ॥ ५ ॥
दुर्गमाध्वचलनश्रमं हरन्, पारिजाततरुरेष सेवितः ।
किं प्रयच्छति मनोगतं फलं, वा न वेति कृपया परीक्ष्यताम् ॥ ६ ॥

## २. प्रबन्ध-परिचयः

कमप्येकं विषयमवलम्ब्य रचितं परस्परसम्बद्धं वाक्यकदम्बकं प्रबन्धः। अथवा कमपि प्रपञ्चनीयं विषयमधिकृत्य तत्स्वरूपोपयोगफलादिप्रदर्शनविधया तदन्तरङ्गबहिरङ्गपरिचयप्रदं मनोरमया गिरोपनिबद्धं वाक्यकदम्बकं प्रबन्धः। केचित्तु प्रतिपाद्यविषयप्रतिपादनसमर्थं मत्वोपनिबद्धं वाक्यमेव प्रबन्धमाहुः। प्रबन्धः, प्रस्तावः, रचना, सन्दर्भः, निबंधः, इमे शब्दा अर्थतो न भिद्यन्ते। स चायं प्रबन्धः गद्येन पद्येन च कर्तुं शक्यते तेन द्विविधः उभयथापि भाषायाः सालङ्कार-निरलङ्कारताभेदेन पुनर्द्वैविध्यम्। तत्र साधारणभाषयोपनिबन्धने निरलङ्कारत्वम्, अनुप्रासयमकोपमारूपकादिसमृद्धभाषानुसारेण सालङ्कारत्वम्।

अयं च भेदो नार्थमनुसन्धाय कृतः, तथा-करणेन तु निरूपणात्मकाः, आख्यानात्मकाः, आलोचनात्मकाश्चेति त्रिविधाः प्रबन्धाः।

( १ ) कमपि सजीवं निर्जीवं वा विषयमाश्रित्य तत्स्वरूपोपयोगादिनिरूपणपराः प्रबन्धा निरूपणात्मकाः ( यथा गाम्, पुस्तकम् वाऽधिकृत्य लिखिताः )।

( २ ) कामपि पुरावृत्तां सामयिकीं वा घटनामधिकृत्य तद्वर्णनप्रवृत्ताः प्रबन्धा आख्यानात्मकाः कथ्यन्ते ( यथा रामकथा-भूकम्प-स्वकृत-[illegible]-विदेशयात्रा-जीवनचरितादिकमाश्रित्य लिखिताः प्रबन्धाः )।

( ३ ) स्वचिन्तनशक्तिकल्पना-पुरस्कारेण कमपि गूढं विमर्शक्षमं च विषयमवलम्ब्य विरचिताः प्रबन्धा आलोचनात्मकाः प्रोच्यन्ते ( यथा-

सत्यभाषण–देशभक्ति–परोपकारोद्योगादिकमाश्रित्य रचिताः)। अयं च भेदनिर्देशो नात्यन्तिकभेदं दर्शयितुं किन्त्ववबोधसौविध्यार्थमेव। वस्तुतस्तु परस्परसङ्करो ह्यमीषा दृश्यते लेखकानां मतेर्वैश्वरूप्यात्, तासु तासु भाषासु लेखकानां प्रसिद्धासु प्रबन्धविषयककृतिषु तत्तद्विषयविभागसाङ्कर्यदर्शनाच्च। अतोऽत्र प्रबन्धलेखनकलायां प्रवेशमिच्छतां बालकानां बुद्धेर्विकासायैव भेदनिर्देशः। एतेन पथा हि गृहीतप्रबन्धरूपाश्शक्नुवन्ति पश्चात्तत्स्वरूपं वस्तुतः परिच्चेतुम्, असत्येन वर्त्मना सत्यानुसन्धानस्य शास्त्रशैलीप्रचलितत्वात्।



## ३. प्रबन्धरचनाविषयेऽवश्यध्येया नियमाः

(१) प्रबन्धसौन्दर्यं सम्पादयितुं न केवलं साधवो विचाराः क्षमन्ते, न वा रोचका वाग्–विस्तराः, अपितु प्रबन्धलेखांशविभागचातुरीसहचरी वर्णनीयविषयसौष्ठवसम्पादनशैली तथा विधातुं क्षमा। तादृशो शैली च तावदशक्योपन्यासा, यावत्प्रबन्धो बुद्धिपथातिथीन् विचारान् यथावद् विभज्य शृङ्खलाबद्धान् न विधत्ते। प्रबन्धलेखको हि प्रथमं—यं विषयमधिकृत्य प्रबन्धमारचयितुं प्रयतेत, तत्र विषये ध्यानाध्वनोनान् विषयान् पश्चषेषु सम्भवत्सु परस्परासङ्कीर्णेषु विभागेषु विभज्य उपरि विन्यस्येत्। एवं वर्गीकृतान् वस्तुभूतान् प्रतिपाद्यार्थान् एकैकशो निवध्नीयात्। एवं हि पुनरुक्तिरपुष्टिर्वृथापदोपन्यासश्च न भवति।

(२) भाषाऽपि प्रबन्धविषयानुसारिणी प्रबन्धकेन प्रयोज्या, प्रबन्धस्य पुंसो हि भाषा शरीरम्, भाव आत्मा। भाषादोषो हि प्रबन्धतनुं दूषयति, अतो यथोचितभाषाप्रयोगसामर्थ्यवैधुर्येऽपि सरसमसृणभाषाप्रयोगेण निर्वाहः सुकरः। एतदर्थं प्रसिद्धप्रबन्धाध्ययनकाले तद्भाषोपरि सावधानदृक्पातो महते फलाय जायते।

(३) विषयविभागकाले विभाज्यविषयपौर्वापर्यमपि तथा विधेयं यथा न्यायविरोधो न जायेत। अर्थात् सति साध्यसाधनभावे द्वयोर्निर्देश्ययोः प्रथमं साधनमेव निर्देश्यमनन्तरं साध्यम्।

(४) यथासम्भवं तान् शब्दान् न प्रयुञ्जीरन् प्रबन्धलेखका येष स्वरूपलिङ्गादिविषये सन्देहः स्यात्, न वा तान् सिद्धान्तानेवोपन्यस्येयुर्ये साधु समर्थयितुं न शक्येरन्, न च स्वशक्तिबहिर्भूतदीर्घसमासतादिनिर्वाहाय प्रयस्येयुः; तथाविधातारो हि परमावश्यकप्रतिपाद्यप्रतिपादनायापि नालं भवन्ति, दोषैश्च ध्रियन्ते।

(५) प्रथमं प्रबन्धविषयं दीर्घदीर्घैर्भिद्यमानाकारैश्चाक्षरैर्विन्यस्य तदधःकल्पितविभागलेख्यांशसूचीं निबध्नीयुः, ततश्च यथाक्रममेकमेकं विभागमादाय तमपि कियता स्वरूपभेदेन लिखेयुः, तं यथाविचारं विवेचयेयुश्च।

(६) इह चावश्यमवदध्युर्यद् यया शैल्या प्रक्रमः कृतः, समाप्तिरपि तामेव शैलीमनुगच्छेत्। कठिनेन वन्धेनोपक्रान्ता मध्ये सरलबन्धमुपनीताश्च प्रबन्धाः किमपि दारिद्र्यमिव सूचयेयुः प्रबन्धृणाम्।

(७) प्रबन्धभाषासौन्दर्यं प्रतिपाद्यभावाभिव्यक्तिं च विधातुं प्राचीनान् प्रचलितप्रयोगान् न्यायान् सूक्तिनिचयांश्च यथास्थानमुपन्यस्येयुः, येन भाषायाः प्रौढता रमणीयता च प्रतिभायात्। सूक्तयो न्यायाश्च हि भाषास्रजि सुमेरुवदुद्द्योतमानाः पाठकानां मानसानि बलादिवावर्जयन्ति।

(८) प्रबन्धशरीरे समुपयुज्यमानाश्शब्दास्तत्राहृता अर्था वा यथासम्भवं पुनरुक्ता न विधेयाः, केवलमुपसंहारसमये परमापेक्षिता भागमात्रगा पुनरुक्तिर्न हस्यते।

(९) ये विषयविभागाः शीर्षकस्थले स्थापितास्तेषां सर्वेषां विवेचनं यथा कृतं स्यात्, तथा प्रयतनीयमर्थात् सर्वेषामेव तेषां विवेचनं स्वल्पेन (सति काले महता वा) शब्दसमुदायेन विधेयमेव। एकस्यैव विभागस्य विवेचने यदि सुमहान् कालोऽतिवाह्येत, तर्हि परेषां भागानां विवेचनं न कृतं सत्प्रबन्धस्य स्वरूपमेव विघटयेत्।

येषां छात्राणां भाषादौर्बल्यं प्रबन्धलेखावसरे वाक्यानि सङ्कोचयति, ततश्च प्रबन्धसौष्ठवं प्रतिबध्नाति, तैरधोल्लिखितविषयेषु अवधानमाधेयम्।

(१) एकस्य विवेचनीयविषयस्य विवेचनावसरे तदन्यविषयेभ्यो बुद्धिरपकर्षणीया। एवं हि—प्रबन्धलेखनकाले छात्राः सम्पूर्णं प्रबन्धकलेवरमेव सहैव बुद्धौ समुत्कण्ठन्तेऽनुसन्धातुम्। एवं हि सति नानादिक्षु प्रसरन्ती तन्मतिर्व्यग्रतामवलम्बतेऽल्पो राशिरपामिव परिणाहिनि क्षेत्रे। स चैव क्षुद्रतमे भूभागे नियोज्यमानो यथा तमाप्लावयति, तथैवैकत्र निहिता मतिस्तं विषयं मूलतः परिमार्जयति। पृथक्पृथगनुसन्धीयमाना विवेच्यमानाश्च ते तावति देशे केन्द्रिताया बुद्धेः सम्पूर्णमपि प्रकाशमासाद्य प्रतिपद्यन्ते स्फुटीभावम्।

(२) एक एवार्थः स्वल्पेन शब्देन कथ्यते महताऽपि। तत्र सिद्धलेखकाश्शब्दस्याल्पतामेवाद्रियन्तेऽर्थांशे बद्धादरत्वात्। परं दुर्बलभाषाकोशार्थभरास्तु छात्रा भाषावर्द्धनालङ्करणप्रयासमश्यमेव कुर्युः। एवं भावदरिद्रोऽपि प्रबन्धः पुमान् अगुणो वस्त्रादिनोत्तमेनेव शोभते। अतः प्रबन्धभाषाभूषणवर्द्धनाभ्यां यतमानैः प्रथमं कर्तृपदस्य कतिचिद्विशेषणीभूतानि पदानि प्रदेयानि, यत्रापि मनोहरशब्दानामन्वेषणे ध्यानं देयम्, एवमेव कर्मपदस्यापि। यथा—'श्यामो ग्रामं गच्छति' अत्र कर्तृपदं श्याम इति, तस्य—'स्वच्छपरिधानः', 'सरोजसुन्दरनयनः', 'सितोष्णीषवेष्टितशिराः' इत्यादीनि विशेषणानि, एवं 'ग्रामम्' इत्यस्य 'वापीविकचकमलशोभाभिरामम्' 'कदलीवनहरितिमहृतपथिकजननयनम्' 'चत्वरसञ्चरच्चपलचरणशिशुसमुदयम्' इत्यादीनि विशेषणानि। तथा च—'सरोजसुन्दरनयनः श्यामः कदलीवनहरितिमहृतपथिकजननयनं ग्रामं गच्छति' इति वाक्यं जातम्, तेन प्रबन्धस्य कायोऽपि कियतांशेन वर्द्धितः, शोभापि सम्पादिता। इदं परमिहावधेयम्—वाक्यवर्द्धनकाले वैरस्यं यथा नागच्छेत्तथा चेष्टितव्यं यथास्यैव वाक्यस्य 'विद्याप्रभावविजितहयग्रीवगौरवः श्यामो जितदेवपुरं ग्रामं स्वव्यापारेणोत्पाद्यमानस्य संयोगस्याश्रयं कुरुते', इत्थं विन्यासे महतो महतो गौरवगणस्योपादानादप्रचलितप्रायशब्दावलीप्रयोगाच्च किञ्चिद्वैगुण्यमिव प्रतिभाति।

(३) प्राचीनप्रबन्धपुस्तकपाठकाले सावधानेन मनसा तदीयवाक्य-विन्यासार्थप्रकाशनशैलीविषयविभाजनचातुरीषु सतर्कताऽऽस्थेया यथा च ते ते विषया हृदयङ्गमाः सन्तः प्रबन्धलेखावसरे साहाय्यमादध्युः।

(४) कस्य प्रसङ्गे किं वर्ण्यते, कस्य कीदृशं विशेषणमुपयुज्यते, कस्यामवस्थायां के भावाः प्रादुर्भवन्ति, कीदृशस्य पुरुषस्य कीदृग्वेशभू-षादिकं भवितुमुचितमित्यादिवस्तुवृत्तजातस्य ज्ञानायापि यत्नः करणीयो विद्यार्थिभिः। यथा—यदि मुनेः प्रसङ्गे चूडामणिखड्गलतादिकमुपादीयते, भक्त्या शिवमाराधयितुं प्रतिष्ठमानस्य वा प्रयाणकाले उपानच्छत्रालङ्कारा-दिकं वर्ण्यते तदाऽस्थाननिवेशितं तन्न शोभते (कस्य कृते किं वर्ण्यत इत्यस्यैव पुस्तकस्याग्रिमेऽध्याये प्रदर्शयिष्यते)।

(५) प्रायशः परीक्षाकाले नियतः समयस्सर्वेषामेव च्छात्राणां कृते स्वल्पः प्रतीयते, तावतैव समयेन सुचिन्तितस्य मनोरमया शैल्या लिखि-तस्य च प्रबन्धस्योपस्थापनं तत्तत्परीक्षार्थिनां कृते न सुकरमतश्छात्रैः स्वयोग्यतामनुसृत्य नातिदीर्घो न चातिह्रस्वरूपः प्रबन्ध उपक्रम्यः। तत्र लिपिदोषाणां दूरीकरणे सङ्गतवाक्यावलीविन्यासे च प्रयत्नः करणीयः। महान्तम्प्रबन्धमुपस्थापयितुं यतमाना हि विद्यार्थिनः प्रबन्धसारं पुनरावर्त्तयन्तो भाषाशैथिल्यं पुनरुक्तिं च कुर्युः, तथाकरणेन च परीक्ष-काणामवज्ञाया भाजनं जायेरन्।

किञ्च अर्थतो व्यवहारतश्चाज्ञाताश्शब्दा नैव व्यवहार्याः, तथाकरणेन हि परीक्षार्थिनामज्ञानमनायासमेव लक्षयन्ति परीक्षकास्तेन च तेषां दृष्टिविपर्येति। व्यक्तिविशेषस्यैकान्तताात्मीयविचारा उक्तयश्च नोपन्यस्त-व्याः, न वा परीक्षकाणां समीपे तदीयां सहानुभूतिमात्मनि समर्जयितुं किमपि लेख्यम्, प्रबन्धं लिखित्वा सकृत्, सति सम्भवे द्विर्वा तस्य संशोधनं विधातव्यं, येन तथाक्षरच्युतिह्रस्वदीर्घदन्त्यतालव्यवक्तव्यानु-क्तिकृता दोषा न तिष्ठेयुः, अल्पकायोऽपि परिमार्जितः प्रागुदीरितदोषा-स्पृष्टः प्रबन्धः परीक्षकेभ्यो यथा रोचेत, न तथा तुन्दिलतनुरपि तत्तद्दो-षदूषितः। अतः—

'गुणानामादरः कार्यो न कायगुरुता मता'
इदमवश्यं सदा स्मरणीयम्।

---

## ४. लेखमात्रे साधारणनियमाः

(१) प्रबन्धेऽन्यादृशेऽपि वा लेखे निम्नलिखितान् नियमाननुध्यायतां छात्राणां लेखश्चमत्कारयुतो भवति। तत्र प्रथमो नियमो यथा—

कर्तृप्रत्ययस्थले क्रिया कर्त्तारमनुसरति। अर्थात् कर्तुः वचनं पुरुषं च क्रियाऽनुवर्त्तते। यथा—रामः पुस्तकं पठति। अत्र कर्तृपदं राम इति, तच्चैकवचनान्तं प्रथमपुरुषरूपं च। तेन पठति इति क्रियापदेऽपि तथा। एवं 'त्वं ग्रामं गच्छसि' इत्यत्रापि कर्तृपदं त्वमिति मध्यमपुरुषीयैकवचनं तेन क्रियापि तथा। एवमेवान्यदप्युदाहार्यम्।

कर्मप्रत्यये पुनः क्रिया कर्मानुसरति, यथा—मया पुस्तकं दृश्यते, अत्र कर्मपदं पुस्तकमिति तदनुरोधेन दृश्यत इत्यत्रापि प्रथमपुरुषैकवचनमेव न तु कर्तृसमर्पक-मया-पदप्रकृतिभूतास्मच्छब्दबलेनोत्तमपुरुषः।

(२) विशेष्ये या लिङ्गसंख्याविभक्तयस्ता एव विशेषणेऽपि प्रयोज्याः। यथा 'सुन्दरो रामः' अत्र विशेष्ये रामे—पुंस्त्वम्, एकत्वं प्रथमा चास्ति, तेन तद्विशेषणे सुन्दरपदेऽपि तथैव। 'सुन्दर्यः स्त्रियः' अत्र च विशेष्यभूते स्त्रियः इत्यत्र स्त्रीत्वम्, बहुत्वम्, प्रथमा चास्ति तदनुरोधेन च तद्विशेषणभूते 'सुन्दर्यः' इत्यत्रापि तथा। एवमन्यत्रापि बोध्यम्[1]।

---

१. इदं पुनरिहावधेयम्, अयं नियमः कतिपु चित्स्थलेपु नापि चलति, यथा-'शतं ब्राह्मणाः' अत्र विशेष्ये ब्राह्मणशब्दे सत्यपि बहुत्वे 'विंशत्याद्याः सदैकत्वे' इत्युक्त्या शतं-पदे एकवचनमेव। एकमेव 'वेदाः प्रमाणम्' 'धनजनप्रभावाः कारणम्' इत्यादावपि विभिन्नवचनकत्वदर्शनेनासाधुत्वं न शङ्कनीयम्, अत्रत्यसूक्ष्मविचारस्तु विस्तरभयादत्रानावश्यकत्वाच्चोपेक्षितः, कुतूहले तु स्वगुरवः प्रष्टव्याः।

( ३ ) यथासम्भवं कर्तृपदविशेषणानां सर्वतः प्रथमं, ततः कर्तृपदानां तदनन्तरं विशेषणपुरस्कृतस्य कर्मपदस्य ततः क्रियायाः प्रयोगः। यथा—'विचारचतुरो रामः शुभलक्षणां वनितामवोचत्' अत्र कर्तृविशेषणं विचारचतुर इति, वनितारूपकर्मणो विशेषणं शुभलक्षणाम् इति। व्यस्तप्रयोगतायां तु वाक्यस्य त्वरयार्थसमर्पकत्वं विहन्यते, यथा—रामः शुभलक्षणां वनितां विचारचतुरोऽवोचत्। अत्र चिरं चिन्तयित्वैव कोऽपि यथायुक्तं परस्परसम्बन्धमनुसन्धायार्थं प्रतिपद्येत। अत एव चेदृशोऽन्वयो दोषतया गणितो रीतिग्रन्थकृद्भिः।

( ४ ) शब्दमैत्रीसमीक्षणमपि प्रबन्धं लिखद्भिः करणीयं भवति। सा च शब्दमैत्री समानश्रुतिवर्णारब्धशब्दसमुदयप्रयोगेण निरुह्यते यथा—'गदाधरो धरति' अत्रैवार्थे 'गदाधरो विभर्त्ति' इत्यपि सुवचपरं प्रथमं चरमापेक्षया चमत्कारकम्। एवं 'रामो मायिनं रावणं जघान' अत्रैवार्थे 'रामो मायाप्रवीणं प्राणितं नामुञ्चत्' अयं प्रयोगः प्रकर्षमावहति। इत्थमन्यत्रापि भावनाऽभ्यासावुपयोज्य कल्पनीयम्। इदन्तु पुनर्न विस्मरणीयं, यदयं क्रमो दुराग्रहतां न यथा यायात्। दृश्यन्ते हि कतिपये तादृशाः प्रयोगपण्डिता ये शब्दमैत्रीमर्जयितुं निखलमपि गुणगणं परित्यजन्ति। परमियं प्रवृत्तिर्न प्रशंसाऽऽस्पदम्। अयमपि क्रमो मात्रयैव प्रयुक्तो रोचते लवण इव व्यञ्जनेषु। कियती मात्रा स्वादाय, कियत्या वा मात्रयाऽतिशय्यते सीमेति रसज्ञा एव ज्ञातुमीशाः, सामान्यतस्तु यावताऽर्थकाठिन्यं श्रुतिकटुत्वं च नापतेत्, तावदत्र प्रसङ्गे प्रयतनीयम् इति मध्यमो मनोरमो मार्गः।

( ५ ) यावतांशेन भाषाप्रौढिर्लब्धा भवेत्तावतांशेनैव प्रबन्धस्यार्थांशमपि परिमार्जयितुं चेष्टेरन् विद्यार्थिनः। अर्थात् प्रबन्धलेखाभ्याससमये यथा यथा भाषाया गतिः साध्वी बुद्ध्येत तथा तथाऽर्थगौरवमर्जयितुं प्रयतनीयम्, नहि भाषाविन्यासमात्रं प्रबन्धः, किन्त्वर्थप्रत्यायनप्रभु-

वाक्यकदम्बकं प्रबन्ध इति जानन्तो हि च्छात्रा अर्थसाधुतायै यतेरन् । तदर्थं च प्राचीनप्रबन्धपठनं विधेयम् । तत्पठनकाले च कथमत्रार्थाभिव्यञ्जनाचातुर्यमाचरितमिति समाधाय मनो ध्येयम् । तथा कुर्वन्तो हि विद्यार्थिनः कियतैव कालेन ज्ञातरहस्याश्चमत्कारकरं प्रबन्धं लिखेयुः ।

## ५. वाच्यपरिवर्तनम्

प्रबन्धलेखावसरे प्रायश इदं दृश्यते यच्छात्रा एकत्रैव द्वित्राणि वाक्यानि कर्तृवाच्यानि प्रयुज्य मध्ये कतिचित् कर्मवाच्यानि प्रयुञ्जते, परतश्च पुनः प्राचीनप्रक्रममनुसरन्ति, परमिदं पण्डितेभ्यो न रोचतेऽतः सत्यामपि स्फूर्त्तौ प्रसङ्गमनुसन्धाय वाक्यं प्रयोज्यम् । यत्र कर्तृप्रत्ययान्तक्रियाप्रवाहः प्रचलति तदभ्यन्तरे यदि कापि कर्मप्रत्ययान्ता क्रिया ध्यानमवगाहते तदा तां कर्तृप्रत्ययान्तत्वेन विपरिणम्य प्रयुञ्जीरन् प्रियच्छात्राः । एवं करणेन हि प्रक्रमनिर्वाहो भवति । एतदर्थं च वाच्यपरिवर्तनप्रक्रियाया ज्ञानमभ्यासश्चापेक्ष्येते । तत्र कर्तृप्रत्ययान्तस्य कर्मप्रत्ययान्तता भावप्रत्ययान्तता चेति द्वयी गतिः । तत्र सकर्मकधातुसत्त्वे कर्मप्रत्ययान्तता तदितरधातुप्रयोगे तु भावप्रत्ययान्तता । तथा च पाणिनेः सूत्रम्—

'लः कर्मणि च भावे चाकर्मकेभ्यः' ३ । ४ । ६९ ।

तत्राकर्मकधातूनां वाच्यपरिवर्त्तने प्रक्रान्ते क्रिया कर्त्ता च परिवर्त्तेते ( कर्म तु नैवास्ति ) । प्रथमान्तः कर्त्ता तृतीयान्तो भवति ( वचनं पुनः प्राचीनमेव ) । क्रिया च तत्तल्लकारस्य प्रथमपुरुषैकवचनमात्रस्य (मध्यमोत्तमपुरुषौ नात्र भवतः, नापि द्विवचनवहुवचने । अत्रत्यां युक्तिं सिद्धान्तकौमुदीभावकर्मप्रकरणे पश्यन्तु) यथा—रामो हसति, (रामेण हस्यते), रामोऽहसत् (रामेणाहस्यत) । सकर्मकधातुप्रयोगे तु क्रिया (कर्तृप्रत्ययस्थले कर्तारमिव ) कर्मप्रत्ययस्थले कर्मानुसरन्ती भवति, अर्थात् कर्म यदि वहुवचनान्तं तदा क्रियापि तादृशी, कर्मणि मध्यमपुरुषीये क्रियाया अपि

( ३ ) यथासम्भवं कर्तृपदविशेषणानां सर्वतः प्रथमं, ततः कर्तृ-पदानां तदनन्तरं विशेषणपुरस्कृतस्य कर्मपदस्य ततः क्रियायाः प्रयोगः। यथा—'विचारचतुरो रामः शुभलक्षणां वनितामवोचत्' अत्र कर्तृविशेषणं विचारचतुर इति, वनितारूपकर्मणो विशेषणं शुभलक्षणाम् इति। व्यस्त-प्रयोगतायां तु वाक्यस्य त्वरयार्थसमर्पकत्वं विहन्यते, यथा—रामः शुभ-लक्षणां वनितां विचारचतुरोऽवोचत्। अत्र चिरं चिन्तयित्वैव कोऽपि यथायुक्तं परस्परसम्बन्धमनुसन्धायार्थं प्रतिपद्येत। अत एव चेदृशोऽन्वयो दोषतया गणितो रीतिग्रन्थकृद्भिः।

( ४ ) शब्दमैत्रीसमीक्षणमपि प्रबन्धं लिखद्भिः करणीयं भवति। सा च शब्दमैत्री समानश्रुतिवर्णारब्धशब्दसमुदयप्रयोगेण निरुह्यते यथा—'गदाधरो धरति' अत्रैवार्थे 'गदाधरो बिभर्त्ति' इत्यपि सुवचपरं प्रथमं चरमापेक्षया चमत्कारकम्। एवं 'रामो मायिनं रावणं जघान' अत्रैवार्थे 'रामो मायाप्रवीणं प्राणितं नामुञ्चत्' अयं प्रयोगः प्रकर्षमावहति। इत्थम-न्यत्रापि भावनाऽभ्यासावुपयोज्य कल्पनीयम्। इदन्तु पुनर्न विस्मरणीयं, यदयं क्रमो दुराग्रहतां न यथा यायात्। दृश्यन्ते हि कतिपये तादृशाः प्रयोगपण्डिता ये शब्दमैत्रीमर्जयितुं निखिलमपि गुणगणं परित्यजन्ति। परमियं प्रवृत्तिर्न प्रशंसाऽऽस्पदम्। अयमपि क्रमो मात्रयैव प्रयुक्तो रोचते लवण इव व्यञ्जनेषु। कियती मात्रा स्वादाय, कियत्या वा मात्रयाऽति-शय्यते सीमेति रसज्ञा एव ज्ञातुमीशाः, सामान्यतस्तु यावताऽर्थकाठिन्यं श्रुतिकटुत्वं च नापतेत्, तावदत्र प्रसङ्गे प्रयतनीयम् इति मध्यमो मनो-रमो मार्गः।

( ५ ) यावतांशेन भाषाप्रौढिर्लब्धा भवेत्तावतांशेनैव प्रबन्धस्यार्थां-शमपि परिमार्जयितुं चेष्टेरन् विद्यार्थिनः। अर्थात् प्रबन्धलेखाभ्याससमये यथा यथा भाषाया गतिः साध्वी बुद्ध्येत तथा तथाऽर्थगौरवमर्जयितुं प्रयतनीयम्, नहि भाषाविन्यासमात्रं प्रबन्धः, किन्त्वर्थप्रत्यायनप्रभु-

वाक्यकदम्बकं प्रबन्ध इति जानन्तो हि च्छात्रा अर्थसाधुतायै यतेरन् । तदर्थं च प्राचीनप्रबन्धपठनं विधेयम् । तत्पठनकाले च कथमत्रार्थाभिव्यञ्जनाचातुर्यमाचरितमिति समाधाय मनो ध्येयम् । तथा कुर्वन्तो हि विद्यार्थिनः कियतैव कालेन ज्ञातरहस्याश्चमत्कारकरं प्रबन्धं लिखेयुः ।

## ५. वाच्यपरिवर्तनम्

प्रबन्धलेखावसरे प्रायश इदं दृश्यते यच्छात्रा एकत्रैव द्वित्राणि वाक्यानि कर्तृवाच्यानि प्रयुज्य मध्ये कतिचित् कर्मवाच्यानि प्रयुञ्जते, परतश्च पुनः प्राचीनप्रक्रममनुसरन्ति, परमिदं पण्डितेभ्यो न रोचतेऽतः सत्यामपि स्फूर्त्तौ प्रसङ्गमनुसन्धाय वाक्यं प्रयोज्यम् । यत्र कर्तृप्रत्ययान्तक्रियाप्रवाहः प्रचलति तदभ्यन्तरे यदि कापि कर्मप्रत्ययान्ता क्रिया ध्यानमवगाहते तदा तां कर्तृप्रत्ययान्तत्वेन विपरिणमय्य प्रयुञ्जीरन् प्रियच्छात्राः । एवं करणेन हि प्रक्रमनिर्वाहो भवति । एतदर्थं च वाच्यपरिवर्तनप्रक्रियाया ज्ञानमभ्यासश्चापेक्ष्येते । तत्र कर्तृप्रत्ययान्तस्य कर्मप्रत्ययान्तता भावप्रत्ययान्तता चेति द्वयी गतिः । तत्र सकर्मकधातुसत्त्वे कर्मप्रत्ययान्तता तदितरधातुप्रयोगे तु भावप्रत्ययान्तता । तथा च पाणिनेः सूत्रम्—

'लः कर्मणि च भावे चाकर्मकेभ्यः' ३ । ४ । ६९ ।

तत्राकर्मकधातूनां वाच्यपरिवर्त्तने प्रक्रान्ते क्रिया कर्त्ता च परिवर्त्तेते ( कर्म तु नैवास्ति ) । प्रथमान्तः कर्त्ता तृतीयान्तो भवति ( वचनं पुनः प्राचीनमेव ) । क्रिया च तत्तल्लकारस्य प्रथमपुरुषैकवचनमात्रस्य (मध्यमोत्तमपुरुषौ नात्र भवतः, नापि द्विवचनवहुवचने । अत्रत्यां युक्तिं सिद्धान्तकौमुदीभावकर्मप्रकरणे पश्यन्तु) यथा—रामो हसति, (रामेण हस्यते), रामोऽहसत् (रामेणाहस्यत) । सकर्मकधातुप्रयोगे तु क्रिया (कर्तृप्रत्ययस्थले कर्तारमिव ) कर्मप्रत्ययस्थले कर्मानुसरन्ती भवति, अर्थात् कर्म यदि वहुवचनान्तं तदा क्रियापि तादृशी, कर्मणि मध्यमपुरुषीये क्रियाया अपि

तथाविधत्वमेव । यथा—रामो मां पश्यति (रामेण अहं दृश्ये) । कर्मप्रत्यय-स्थले कर्त्तरि तृतीया तु न्यायप्राप्तैव । राम आवां पश्यति (रामेण आवां दृश्यावहे) । रामः अस्मान् पश्यति (रामेण वयं दृश्यामहे) । रामः त्वां पश्यति (रामेण त्वं दृश्यसे) । रामः युवाम् पश्यति (रामेण युवां दृश्येथे) । रामः युष्मान् पश्यति (रामेण यूयं दृश्यध्वे) । रामः भवन्तं पश्यति (रामेण भवान् दृश्यते) रामः भवन्तौ पश्यति (रामेण भवन्तौ दृश्येते) । रामः भवतः पश्यति (रामेण भवन्तो दृश्यन्ते) एवमन्यान्यप्युदाहरणानि कल्पनीयानि[१] ।

——

## ६. चिह्नप्रकरणम्

वर्त्तमानयुगे कस्यांचिदपि भाषायां किमपि लिखद्भिः प्रचलितचिह्न-निवहप्रयोगोऽवश्यकर्त्तव्यतामुपगतस्तं विना भाषाया अर्थबोधनशक्तेः कुण्ठनात्, सत्यप्यर्थबोधनसामर्थ्ये स्फुटप्रतीतेः सिद्ध्यै लेखशोभासम्पत्तये च तत्प्रयोगस्य परमप्रयोजनीयत्वाच्च । तस्माद्विद्यार्थिभिः प्रबन्धं लिखितुमुपक्रममाणैरधोलिखितनियमेषु अवधानं देयम् ।

चिह्न-परिचयः—

यानि प्रयुक्तानि सन्ति विरामं व्यञ्जयन्ति, तस्य मात्रां च प्रकटयन्ति, वाक्यानां परस्परसम्बन्धमभिदधते तदर्थान् स्पष्टयन्ति, अग्रिमवाक्यानामुच्चारणे (विश्रामप्रदानविधया) साहायकं चाचरन्ति, तानि चिह्नानि कथ्यन्ते । तानि बहुविधानि, तेषु—

---

१ वाच्यपरिवर्त्तनविषयकज्ञानस्य दृढीकरणाय सकर्मकाकर्मकधातुरूपैः सह शतं वाक्यानि विरचय्य तेषां वाच्यपरिवर्त्तनं विद्यार्थिनो विदध्युः । सर्वेष्वपि लकारेषु वाच्यपरिवर्त्तनं विधाप्य तत्रापतिताशुद्धीरध्यापका अपाकुर्युः दृढीभूते च तत्त्वतस्तज्ज्ञाने वाक्यविन्यासः सरलोऽतोऽत्रावधानं देयम् ।

अल्पविरामः ( , )

यत्र ( , ) एतदाकारं चिह्नं भवेत् तत्रैकवर्णोच्चारणकालपर्यन्तो विरामोऽवलम्ब्य, अस्यैव सङ्केतस्य नाम—'अल्पविरामः' इति, उदाहरणं यथा—माता, पिता, गुर्वादयश्च श्रेष्ठाः पूज्याः । ( अथवा ) यदि भवान् स्वपुत्रस्य शिक्षायाः साधु प्रबन्धं न करिष्यति, तदा सोऽलसो जनिष्यते, समयं व्यर्थतां नेष्यति, उन्नतेः स्थानेऽवनतिं च यास्यति ।

एतस्य चिह्नस्योपयोगस्थानानि यथा—

( १ ) यदि बहवः शब्दाः वाक्यांशाः बहूनि खण्डवाक्यानि वा तुल्य-दशायां भवेयुस्तदाऽन्तिमं विहाय शेषाणामग्रे विरामचिह्नं देयम्, यथा—रामः, श्यामश्चेदं कार्यं चक्रतुः ।

( २ ) यत्रार्थबाधा पतति, तामपाकर्तुमपि, चिह्नं प्रयुज्यते । यथा—राजा स्वदेशीयो, विदेशीयो वा भवतु, राज्ञो धर्म एव प्रजापालनम् । अत्र यदि ( , ) चिह्नं न प्रयुज्यतेऽर्थबोध एव प्रतिबध्यते ।

( ३ ) सम्बोधनान्तपदेभ्यः परतोऽपि, चिह्नमिदं प्रयोक्तव्यम् । यथा—बालकाः, सदा सदाचारमाद्रियध्वम् ।

( ४ ) यदि द्वयोः परस्परान्वितयोः पदयोर्वाक्यांशयोः खण्डवाक्ययोर्वा मध्ये किमपि पदं खण्डवाक्यं वा पतति, तेन च तयोः सम्बन्धो विच्छिद्यत इव, तदा तत्र, चिह्नं प्रयुज्यते । यथा—देवदत्तः, यं भवान् बहोः कालात्परिचिनोति, अतिमनस्वी बालकोऽस्ति ।

( ५ ) यत्र इदं तत् प्रभृति सापेक्षं पदं न प्रयुज्यते तत्रापि, चिह्नं प्रयुज्यते । यथा—कदाऽवकाशो भविता, नाहं वक्तुं प्रभुः ।

( ६ ) परोक्तेरुद्धरणे ततः पूर्वमल्पविरामचिह्नमुपयुज्यते । यथा-रामो ब्रूते स्म, तेन मदीयं पुस्तकं गृहीतम् ।

अपूर्णविरामः ( :— )

यत्र ( :- ) एतादृशं चिह्नं भवेत्तत्राल्पविरामापेक्षयाऽधिककालपर्यन्तं

विरमणीयम् । अस्य प्रयोगश्च तत्र क्रियते यत्र किमपि वक्तव्यं पृथक्कृत्य विवक्ष्यते, किमपि स्फुटं वा गणयितुमिच्छा क्रियते । यथा—निम्नलिखितेषु पञ्च साधयत :—रामः, देवाः, गणेशः इत्यादि । अस्य चिह्नस्य स्थाने (—) एतादृशेनापि चिह्नेन कार्यं चलति ।

### पूर्णविरामः ( । )

यत्र ( । ) एतादृशं चिह्नं भवेत्तत्र चिरं स्थीयते । अयमेव पूर्णविराम इत्युच्यते । प्रत्येकवाक्यसमाप्तावस्योपयोगः क्रियते यथा--संस्कृतं राष्ट्रभाषा भवतु । अत्र विशेषः ।

### प्रश्नचिह्नम् ( ? )

प्रश्नबोधकवाक्यानामग्रे पूर्णविरामचिह्नस्य स्थाने प्रश्नचिह्नमेव प्रयुञ्जते प्रयोगविदः यथा--त्वं क्व वससि ? त्वं किं पठसि ?

### विस्मयादिचिह्नम् ( ! )

विस्मय-शोक-करुणाद्यन्यतमचित्तवृत्तिबोधकपदवाक्यतदंशानामग्रे (!) एतादृशं चिह्नं दीयते । तदेव विस्मयादिचिह्नम् । यथा--अये ! कीदृशमुद्यानमिदम् ? अहो ! अन्यायेन पीड्यते वसुन्धरा ।

### निर्देशकचिह्नम् (—)

( १ ) यत्र किञ्चिदुक्त्वा तस्यैव दृढीकरणाय किञ्चिदन्यदुच्यते, यत्र वा किमपि दुरुक्तं संशोधयितुमन्यद्वाक्यं प्रयोक्तुमिष्यते तत्र—निर्देशकचिह्नमुपयुज्यते । यथा—तदुक्ताः शब्दाः—वाणा आसन् यथा वा—मया त्वमादिश्यसे—ममायं भ्रमस्त्वं तत्पात्रं नासि ।

( २ ) शीर्षकसमुदायोपनिबन्धे प्रत्येकशीर्षकस्यावसाने निर्देशकचिह्नं प्रयुज्यते । यथा—रामकथा--तस्या उपादानानि--सामयिकेतिवृत्तानि ।

कोष्ठचिह्नम् (   ) वा {   }

कमपि शब्दं वाक्यं वा प्रयुज्य तदर्थं एव शब्दान्तरं वाक्यान्तरं वा प्रयुज्यते तत्र चिह्नमिदं प्राप्तावसरं भवति। यथा—

उपपादनं ( कथनं ) रोचकं प्रार्थ्यते।

उद्धरणचिह्नम् "    "

यत्र परोक्तेरुद्धरणं क्रियते तत्र चिह्नमिदमुपयुज्यते। यथा—रामः कथितवान् "मम ग्रामे कोऽपि मूर्खो नास्ति" इति।

योजकचिह्नम् ( - )

लिखनावसरे यदि कोपि शब्दः पङ्क्तेरवसानेऽपि समाप्तिं न याति तस्य कतिपयान्यक्षराणि शिष्यन्ते तदेदं चिह्नं दीयते यथा—

रामावतारे रामो ज्येष्ठभावमुप-

गतवान्।

वर्जनचिह्नम् ( - - - - )

यत्र किमपि निन्दनीयम्, अश्लीलं, व्यर्थोपादानं, स्फुटावसेयं वा न प्रयोक्तुमिष्यते तदा वर्जनचिह्नं प्रदीयते यथा—.......

---- उक्त्वा रामं भर्त्सयामास। यस्य मुखात् ---- शब्दो निर्गतो येन सर्वे जहसुः।

लाघवचिह्नम् ( ० )

यः स्फुटमवसीयते तादृशं पुनः पुनरुपादीयमानं वा शब्दं लेखकाः सङ्कोचयन्ति तत्र चेदं चिह्नं प्रयुञ्जते। यथा—ति० (तिथिस्थाने) रामचन्द्रः गच्छति - रा० पठति।

त्रुटिचिह्नम् ( ∧ )

यत्र पङ्क्तौ किमपि लेख्यं हीयते तत्र यदग्रे तस्य सन्निवेशनमुचितं तत्र ∧ एतादृशं चिह्नं दत्त्वा त्रुटितं लिख्यते। यथा—रामः सीता-

पादौ

स्वयंवरे गुरोः ^नत्वा धनुरुत्थापयामास ।

एवं प्रकारेण चिह्नानि साधु परिचित्य तत्प्रयोगस्थलानि च मनसि समवधार्य सावधानतया किमपि लिखद्भिर्यथोपयुक्त-चिह्नानि प्रयोज्यानि, तेन लेखस्य कायः साध्वलङ्कृतः प्रतीयते पाठकैश्चार्थांशे शीघ्रतया ध्यानमाधीयते, चिह्नादिच्युतौ 'दशरामशराहताः' इत्यनेन कोपि नार्थः फलति, तथैव च पदकदम्बकं 'दश रामशराहताः' एवं लिखितं सदर्थमाशु समर्पयति । अतोऽत्र युगेऽवश्यंध्यातव्योऽयं विषयः ।



## ७. प्रबन्धलेखकलामध्यापयद्भिर्ध्येया विषयाः

( १ ) प्रथमं शिक्षकेण सरलसरलो मन्दमतिनापि सुबोधश्च विषयो विद्यार्थिनां पुर उपस्थापनीयः, अनन्तरं स्वयं तमेव विषयमधिकृत्य विद्यार्थिभिः सह वार्त्तालापः करणीयो येन विद्यार्थिनो लेखोपयुक्तानर्थान् मनसि व्यवस्थितक्रमेण समासञ्जयेयुः ।

( २ ) उपर्युक्तप्रकारेण वार्त्तालापप्रश्नोत्तरादिरूपेण समुन्नीतलेख्यांशं विषयमधिकृत्य प्रबन्धं लिखितुं विद्यार्थिन आज्ञापनीयाः ।

( ३ ) प्रबन्धरचनायां सञ्जाता विद्यार्थिनामशुद्धयः स्फुटं बोधनीयाः । यस्य च विद्यार्थिनः प्रबन्धे या अशुद्धयस्स्युस्ताः शोधयितुं स एव वक्तव्यः । याश्चाशुद्धयस्तैर्विद्यार्थिभिर्न शोधयितुं शक्येरंस्ताः शिक्षकेण स्वयं शोधयित्वा दर्शयितव्याः ।

( ४ ) कस्मिश्चिद्विषये ( उपशीर्षकभूतान् ) लेख्यांशान् निर्दिश्य विद्यार्थिनस्ताननुसृत्य प्रबन्धं रचयितुमाज्ञापनीयाः ।

( ५ ) आदर्शभूतप्राग्लिखितप्रबन्धानामन्यतमं निर्दिश्य तत्र विवेचितान् लेख्यांशान् उद्धर्तुं विद्यार्थिनः प्रेरणीयाः, एवं हि कृते सति लेख्यांशनिर्धारणशक्तिरुद्भवति छात्रेषु ।

( ६ ) आदर्शप्रबन्धानामन्यतमं प्रबन्धं स्वसंस्कृते परिवर्त्तयितुं

विद्यार्थिनोऽनुयोक्तव्याः, तदीयमाशयं वाऽऽश्रित्य स्वभाषया नवीनं प्रबन्धं रचयितुमाज्ञापनीयाः ।

( ७ ) यथासमयं विद्यार्थिभिः प्रबन्धा लेखनीयाः स्वयं लिखिताश्च प्रबन्धा विद्यार्थिभ्यो दर्शनीयाः तैर्लेखनीयाश्च ।

( ८ ) विद्यार्थिनां प्रबन्धान् संशोध्यानन्तरं स्वमतं प्रकाशनीयम् । यथा—लेखे सौन्दर्यं नास्ति, अशुद्धयोऽधिकाः सन्ति, पुनरुक्तिबाहुल्यमस्ति, अत्र प्रयुक्तया भाषया भावो न स्फुटति, उल्लेख्यविषयक्रमो मनोरमो नास्ति, भावसौन्दर्यं पर्याप्तं नास्ति, इत्यादि ।

—०:०—

## ८. वर्णनीया विषयाः

प्रबन्धलेखनकाले प्रसङ्गागतानां पदार्थानां वर्णनमवश्यकर्त्तव्यतामवलम्बते तेन विना भावगभीरोऽपि प्रबन्धो निरलङ्कारः सुन्दरो बाल इव प्रतिभाति । अतो यथावसरं ते ते पदार्था वर्णनीयाः । वर्णने च करणीये कस्य विषये किं वर्ण्यत इत्यस्य ज्ञानमावश्यकम्, इति तत् प्रदर्श्यते । तत्र—

राजवर्णने—

नृपे कीर्ति - प्रतापाज्ञादुष्टशास्ति[१] - विवेकिताः ।<br>
धर्म - प्रयाण-सङ्ग्राम - शास्त्राभ्यास - नय-क्षमाः ॥<br>
प्रजारागोऽरिशैलादि[२] - वासोऽरिपुर[३] - शून्यता ।<br>
औदार्य - धैर्य - गाम्भीर्य - श्वर्य - शौर्योद्यमादयः ॥

राजमहिषीवर्णने—

देव्यां सौभाग्य-लावण्य-शील-शृङ्गार[४]-मन्मथाः ।<br>
त्रपा - चातुर्य - दाक्षिण्य-प्रेम - मान-व्रतादयः ॥<br>
वेणी-धम्मिल्ल[५]-सीमन्त-भाल-श्रवण-नासिकाः ।

१. शासनम् । २. अरीन् पराजित्य शैलतामुपगमितेषु [illegible] निवासः ।<br>
३. अरीणां पुराणि, तेषां शून्यता, भयेन [illegible] ।<br>
४. शृङ्गारः—वेशभूषाविन्यासः । ५. [illegible] केशाः ।

कपोलाधारनेत्रभ्रू कटाक्षरदकन्धराः ।
गण्ड[१] बाहुकरोरोजनाभिमध्यवलित्रयम् ।
रोमाणि श्रोणि-जङ्घोरु-पादयुग्मनखक्रमाः[२] ॥

पुरोहितवर्णने—

पुरोहितो हितो वेद-स्मृतिज्ञः सत्यवाक् शुचिः ।
ब्रह्मण्यो[३] विमलाचारः प्रतिकर्त्ताऽऽपदा[४]-मृजुः ॥

कुमारवर्णने—

कुमारे शस्त्र-शास्त्र-श्री-कला-बल-गुणोच्छ्रयाः ।
गजाश्वविद्याचातुर्यं, भक्तिः सुभगतोदयः ॥

मन्त्रिवर्णने—

मन्त्री भक्तः शुचिः शूरोऽनुद्धतो बुद्धिमान् क्षमी ।
आन्वीक्षिक्या[५] दिकुशलः परिच्छेदे[६] सुदेशजः ॥

सेनापतिवर्णने—

सेनापतिर्जितायासः[७] स्वामिभक्तः सुधीरभीः ।
अभ्यासी वाहने शस्त्रे शास्त्रे च विजयी रणे ॥

देशवर्णने—

देशे रत्न-खनि-द्रव्य-पण्य-धान्या-करोद्भवाः[८] ।
दुर्गग्रामजनाधिक्य-नदीमातृकतादयः ॥

ग्रामवर्णने—

ग्रामे धान्य-लता-वृक्ष-सरसीपशुपुष्टयः ।

---

१. कपोलः । २. पादविक्षेपः । ३. वेदनिष्णातः ।
४. विपत्तीनां प्रतीकारस्य कर्त्ता । ५. आन्वीक्षिकी तर्कविद्या ।
६. परिच्छेदो-विचारवान् । ७. जितायासः-श्रमसहिष्णुः ।
८. आकरोद्भवाः आकराः खनयस्तत उद्भवो येषां ते ( अभ्रक, कोइला आदि ) ।

क्षेत्रा-ऽरघट्ट[1]केदार-ग्रामेयी[2]सुखविभ्रमाः ॥

राजधानीवर्णने—

पुरेऽट्ट-परिखा-वप्र-प्रतोली-तोरण-ध्वजाः ।
प्रासादा-ऽध्व-प्रपा-ऽऽराम-वापी-वेश्या-सती-त्वरी ॥

सरोवर्णने—

सरस्यम्भोलहर्यम्भोगजा-द्यम्बुज-षट्पदाः ।
हंस-चक्रा-दयस्तीरोद्यान-स्त्रीपान्थकेलयः ॥

समुद्रवर्णने—

अब्धौ द्वीपा-ऽद्रि-रत्नोर्मि-पोत-पाथो[3]जलप्लवाः ।
विष्णुः कुल्यागमश्चन्द्रवृद्धि-रौर्वो[4]-ऽब्दपूरणम् ॥

नदीवर्णने—

सरित्यम्बुधिगामित्वं वीच्यो जलगजादयः ।
पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः ॥

उद्यानवर्णने—

उद्याने सारणिः,[5] सर्वफल-पुष्प-लता-द्रुमाः ।
पिकालि-केकि-हंसाद्याः क्रीडावाप्य-ध्वगस्थितिः ॥

शैलवर्णने—

शैले, मेघौ-षधी-धातु-वंश-किन्नर-निर्झराः ।
शृङ्ग-पाद-गुहा-रत्न-वनजीवा-द्युपत्यकाः ॥

अरण्यवर्णने—

अरण्ये-हि-त्रराहे-भ[6]-न्यूय-सिंहादयो द्रुमाः ।

---

१. घरघट्टः--कूपाज्जलोत्तोलननयन्त्रम् (रहटघड़ी) । २. ग्रामेयी-ग्रामवनिता (क्वचिद् ग्रामस्त्रीत्यपि पठ्यते) सुखविभ्रमा इत्यस्य स्थाने मुग्धविभ्रमाः इति च पाठान्तरम् । अर्थांशे तु नान्तरम् । ३. पाथः--पानीयम् । ४. और्वः—वडवानलः । ५. सारणिः--कृत्रिमा नदी ( नहर ) । ६. इभाः—गजाः ।

शुक-काक-कपोताद्या भिल्लभल्लू-दवा[1]द्रयः ॥

आश्रमवर्णने--

आश्रमे-ऽतिथिपूजैण[2]-विश्वासः शान्तहिंस्रता ।
यज्ञधूमो मुनिसुता-द्रु[3]सेको वल्कलद्रुमाः ॥

मन्त्रवर्णने--

मन्त्रे पञ्चाङ्गता[4] शक्तिः, षाड्गुण्यो[5]पायसिद्धयः ।
उदया-श्चिन्तनीयाश्च, स्थैर्यौन्नत्यादिसूक्तयः ॥

दूतवर्णने--

दूते स्वस्वामितेजः-श्री-विक्रमौन्नत्यकृद्वचः ।
शत्रुक्षोभकरी चेष्टा-धाष्ट्र्यं दाक्ष्य-मभीरुता ॥

युद्धवर्णने--

युद्धे तु वर्म[6]-बल-चार-रजांसि तूर्य-
निर्घात-नाद-शरमण्डप[7]-रक्तनद्यः ।
छिन्नातपत्र-रथ-चामर-केतु-कुम्भि-
योधाः सुरीवृत[8]भटाः सुरपुष्पवृष्टिः ॥

प्रयाणवर्णने--

प्रयाणे भेरि-निःस्वान-भूकम्प-बलधूलयः ।
करभोक्ष[9]गजच्छत्रवणिक्शकटवेशराः[10] ॥

---

१. दवः—वनवह्निः । २. एणाः—मृगाः । ३. द्रुः—वृक्षः ( पल[illegible] द्रुद्रुमागमाः ) । ४. 'सहायाः, साधनोपाया, विभागो देशकालयोः । विनि[illegible] प्रतीकारः, सिद्धिः पञ्चाङ्गमिष्यते ॥' ५. षड्गुणा एव षाड्गुण्यम्, स्वार्थे ष्य[illegible] च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः । ६. वर्म—कवचः । ७ शरैर्नि[illegible] मण्डपः । ८. सुरी—देवाङ्गना ( ताभिर्वृताः ), (वृता देवाङ्गनाभिर्वृता इत्यर्थं[illegible] ९. उक्षा—वृषः । १०. वेशरः—अश्वतरः ( खच्चर इति भाषा ) ।

अश्ववर्णने—

अश्वे वेगित्व-मौन्नत्यं तेजः, सल्लक्षणं स्थितिः ।
खुरोत्खातरजः-प्रौढिर्ज्ञातिर्गतिविचित्रता ॥

गजवर्णने—

गजे सहस्रयोधित्व-मुच्चता कर्णचापलम् ।
अरिव्यूहविभेदित्वं कुम्भ-मुक्ता-मदादयः ॥

सूर्यवर्णने—

सूर्येऽरुणता रविमणि[1]-चक्राम्बुज[2]-पथिकलोचनप्रीतिः[3] ।
तारेन्दुदीप[4] कौषविघूकतमश्चौरकुलटार्त्तिः ॥

चन्द्रवर्णने

चन्द्रे कुलटाचक्राम्बुजचौरविरहितमोऽर्त्तिरौज्ज्वल्यम् ।
जलधिजलनेत्रकैरवचकोर-चन्द्राश्म[5]दम्पति प्रीतिः ॥

वसन्तवर्णने—

सुरभौ दोलाकोकिलदक्षिणवातद्रुपल्लवोद्भेदाः ।
जातीतरपुष्पचया—भ्रमञ्जरी—भ्रमरझाङ्काराः ॥

ग्रीष्मवर्णने—

ग्रीष्मे पाटल-मल्ली-तापसर-पथिकशोषवातो-ल्काः ।
सक्तु-प्रपा[6]प्रपाक्षी मृगतृष्णाऽऽम्रादि-फलपाकाः ॥

वर्षावर्णने—

वर्षासु घन-शिखिस्मय[7]-हंसगमाः पङ्क-कन्दलो[8]द्भेदौ ॥

---

१. रविमणिः-सूर्यकान्तः । २. चक्रवाकः ( तस्य निशि प्रियावियोगात् ) । ३. पथिकानां दिवा स्वव्यापारत्वेन कान्तास्मृत्यनुदयात् । ४. दीप एव दीपकः ( स्वार्थे कः ) । ५. चन्द्राश्मा—चन्द्रकान्तः । ६. प्रपा—पानीयशालिका । ७. शिखिनां—मयूराणां स्मयो—दर्पः ( घनदर्शनात् ) । ८. कन्दलम्—'कुकुरमुत्ता' इति प्रसिद्धो [illegible] पुष्पविशेषः । एतदेव 'शिलीन्ध्र-' शब्देन व्यवहृतः [illegible] ।

जाती-कदम्ब-केतक-झञ्झा-ऽनिल-निम्नगा हवि

शरद्वर्णने—

शरदीन्दुरविपटुत्वं-जलाच्छता-गस्त्य-हंस-वृषदप

सप्तच्छदा-ऽसिताभ्राऽब्जरुचिः शिखि-पक्ष-[1]मदप

हेमन्तवर्णने—

हेमन्ते दिनलघुतां मरुबकयववृद्धिशीतसम्पत्तिः ।

शिशिरवर्णने—

शिशिरे कुन्दसमृद्धिः कमलहतिर्वा गुडामोदः ।

विवाहवर्णने—

विवाहे स्नानशुद्धाङ्गभूषातूर्यत्रयीरवाः ।
वेदीसङ्गीतहोमादिलाजमङ्गलवर्त्तनम् ॥

स्वयंवरवर्णने—

स्वयंवरे शची–[2]रक्षा–मञ्च–मण्डपसज्जनाः ।
राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम् ॥

सुरापानवर्णने—

सुरापाने विकलता स्खलनं वचने गतौ ।
लज्जा मानच्युतिः प्रेमाधिक्यं रक्ताक्षता भ्रमः ॥

पुष्पावचयवर्णने—

पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते ।
माला–गोत्रस्खलने[3] क्रोधो वक्रोक्ति[4]संभ्रमाश्लेषाः ॥

मृगयावर्णने—

मृगयायां च सञ्चारो वागुरा नीलवेषता ।

---

१. वर्षासु मयूराणां पक्षाः ( चिरनर्त्तनादिना ) च्यवन्ते । २. शची—इन्द्रपत्नी । तस्या रक्षा, स्थापनं पूजनपूर्वाङ्गम् । ३. गूढस्य प्रेम्णो महिम्नाऽनिष्टत्वेऽपि कदाचिदकस्मात् प्रियस्य नामग्रहणं तत् । ४, वक्रोक्तिः-अन्यापदेशेनान्यस्यार्थस्य प्रकटनम् ।

मृगाधिक्यं मृगत्रासो हिंस्रद्रोहो गतित्वरा ॥

इयता प्रकृतविषयपरिचये इत्थमन्यान्यपि वर्णनीयानि वर्णयितुमारभमाणो लेखको यथा स्वबुद्धिवैभवमूहं कृत्वा वर्णयेत् । एषा वर्णनीयविषयसूच्यपि न परिगणनार्था, किन्तूदाहरणार्थैव । नैतावतामेव वर्णनेन परिसमाप्यते कर्त्तव्यम् । नानाविधावस्थासु वर्णनीयभेदस्य नानाविधत्वसम्भवात् । अतश्चेदं निदर्शनमात्रं बोध्यम् । इदं पुनरिहावधेयम्—उपरि निर्दिष्टा वर्णनीयसूचीयं सर्वेषु प्रबन्धेषूपयोगमानेयैवेति नास्ति नियमो, न वा मयाऽऽदर्शनयाऽत्रोपनिबद्धेष्वेव प्रबन्धेषु सर्वत्रेयं वर्णनशैली निभालिता स्याद् भवद्भिः, परं यैरुपयोगाय वर्णनीयविषयसूची गणेष्यते, ये च क्रमशो जाताभ्यासाश्छात्रास्ते सूचीमिमां दृष्ट्वा तदनुसारेणापि वर्णात्मकान् प्रबन्धानलङ्कर्त्तुं शक्नुयुः । अध्यापकाश्च प्रबन्धलेखशैलीं शिक्षयितुं लब्धावसरा इमान् विषयान् मनसिकृत्य च्छात्राणां शक्तिं रुचिं च वीक्ष्य सुप्तां तदीयां शक्तिं जागरयितुमुपक्रममाणा एषामपि ज्ञानाय तानागृह्णीयुः नात्र केनापि विशेषतो निर्बन्धः करणीयः यदिमान् विषयान् ज्ञात्वैव प्रबन्ध उपक्रमणीयो भवतीति । एषां ज्ञानं शोभाऽऽधिक्याय, न स्वरूप लाभायेति संक्षेपः ।



## ६. प्रबन्धभेदादिकथा

एवं वर्णनीयानां विषयाणां ज्ञाने जाते तेषामुपन्यसनेन प्रबन्धेषु शोभाऽऽधिक्यमर्जनीयम् ।

इतः परं प्रचितप्रचारान् विषयानवलम्ब्य कतिचनादर्शप्रबन्धा लिख्यन्ते । तत्र प्रबन्धस्त्रिप्रकारक इति प्रागेवावोचाम । तत्र कस्य प्रबन्धस्य कुत्र प्रकारेऽन्तःपात इति विद्यार्थिभिर्लक्षणसङ्गमनेनोन्नेयम् । अत एव च मया विविच्य प्रकरणभेदो न कृतः । केवलं छात्राणामुपकारायैवायं हि मम व्यापारः । इति ।

## १०. अध्यापकैः किञ्चिदिहावधेयम्

इत्थं हि दृश्यन्ते श्रूयते च यत् प्रबन्धाल्लिखितान्प्राप्य विद्यार्थिनस्तां
कण्ठस्थीकर्तुमुत्कण्ठन्ते, तथा विधायैव परीक्षा उत्तरन्ति, परमेतेन तेष
शक्तिर्न विकसति, येन शिक्षाया लाभेन वञ्चिता एव ते तिष्ठन्ति, तथा
विधाश्च सन्तो गुरूणां गौरवं मलिनयन्ति। अतो यथासम्भवमायस्य
कण्ठस्थीकरणप्रवृत्तिरवरोध्या। छात्राणां लेखसामर्थ्यं यथोदियादेतदर्थं
तैरेकैकस्य प्रबन्धविषयस्य प्रागुक्तप्रकारेणाभ्यासः कारयितव्यः। इयता
प्रकरणेनोक्तस्यार्थराशेर्यथावज्ज्ञाने जाते स्वयं समुत्पन्नलेखशक्तयः समे
धितभाषारुचयश्छात्राः कामपि विलक्षणां स्फूर्तिमासाद्य प्रवर्तेरन्नत्र कम
णीति मम सुदृढो विश्वासः।

एकमिदं पुनरवशिष्यते, कतिपये कथयन्ति—

'येषां छात्राणां व्युत्पत्तिरुद्भवति ते शास्त्रीयज्ञाने मन्दायन्ते' इति
अत्र विषये चिरं चिन्तयताऽपि मया कारणं नोन्नेतुमपारि। सत्यं कोमल
मतित्वं कठिनतरतर्कशास्त्रप्रवेशप्रतिबन्धकरं परं किमशुद्धिबहुलभाषालेख
नाभ्यासोऽपि कस्यापि मते तर्कशास्त्रप्रवेशहेतुतया मतः? अथ तथ
किमिति प्राचां पण्डितानां व्युत्पत्तिस्तेषां शास्त्रीयज्ञानं न प्रत्यबध्नात्?
अवश्यं कोमलमतीनां बालानां सततं सुखश्रव्यहृद्यार्थकाव्यश्रवणाध्ययनत
चिन्तनादिकं तदीयं मनो वैषयिकसुखाभिलाषुकं कृत्वोन्नतिवर्त्म निरुणद्धि
परं शुद्धमार्जितभाषाज्ञानतल्लेखनाभ्यासौ तु सर्वथा सर्वत्रोपकुरुत एव।
अतः सर्वथाऽत्र प्रयतनीयम्।

तदिति विदितवद्भिः शुद्धभाषानिबन्ध-
प्रखरतरमनीषैः सेवितं शास्त्रजातम्।
फलति, समुपदीप्ते कृष्णवर्त्मन्यशेषं
ज्वलति हुतमिदं किन्नावगच्छन्ति सन्तः? ॥

इति पं० श्रीरामचन्द्रमिश्रकृते 'प्रबन्धपारिजाते' प्रथमः पल्लवः।

# द्वितीयः पल्लवः

## आदर्श-प्रबन्धाः

### १. ग्राम्यपाठशाला

( १ ग्राम्यपाठशालापदार्थः, २ तत्स्वरूपपरिचयः, ३ तत्पाठ्यविषयाः, ४ गुरुमहाशयः, ५ आयव्यवस्था, ६ ग्राम्यपाठशालाया लाभः, ७ तदीया दोषाः, ८ उपसंहारः । )

१—ग्राम्यपाठशालापदेन वयं प्राचीनरीत्या चलितान् लघुविद्यालयानवगच्छामः, ये पूर्वं प्रतिग्रामम तिष्ठन्, सम्प्रत्यपि बहुषु ग्रामेषु विद्यन्ते, येषु नूतनरीत्या व्यवस्थापिताः प्रारम्भिकविद्यालया न चलन्ति । ग्राम्यपाठशालासु पठनं लेखनं प्रारम्भिकगणितं च शिक्ष्यते । तासु कन्या बालाश्चाल्पवयसः समधीयते ।

२—ग्रामपाठशालायाः सर्वमपि बाह्यं रूपं विद्यालयतुल्यमेव, केवलं सर्वत्र लघुताऽऽकर्षकसामग्री विरहश्च भवति । एतस्याः कृते पुरा पृथग्भवनं नापेक्ष्यते स्म । कस्यापि देवमन्दिरस्य बहिश्शाले, कस्यापि ग्रामीणस्य सदाशयस्य द्वारदेशे वा ग्रामपाठशाला सञ्चाल्यते स्म । क्वचिच्च ग्राम्यजनतया किञ्चित् किञ्चिद् दत्त्वा ग्राम्यपाठशालार्थं पृथग्भवनमपि निरमास्यत । तत्र शिक्षकस्य शिष्यगणस्य वा कृते रमणीयानामासनानां प्रबन्धो न भवति स्म । विद्यार्थिनः स्वमासनं स्वगृहेभ्य एव नयन्ति स्म । केवलं गुरुमहाशयस्य कृते किञ्चिदुच्चं काष्ठासनं तिष्ठति ।

३—ग्रामपाठशालासु बालानामपरिमार्जिता मतिरनावश्यकविषयाणां भारान्न क्लेश्यते, केवलं लिपिप्रक्रिया, पठनशैली, प्रारम्भिकगणितं च शिक्ष्यते । आधुनिकविद्यालयवत् तासु पाठशालासु सर्वो सहैव नापाठ्यन्त, किन्तु यथाबुद्धिवलं बालाः पृथक् पृथक् पाठ्यन्ते स्म । गणितस्य शिक्षा मौखिकी दीयते स्म । एको वयसा योग्यतया च श्रेष्ठो

बालो यद् वदति सर्वेऽपि बालास्तदावर्तयन्ति, एवं प्रतिदिनं विद्याल
समयसमाप्तिकाले क्रियते। लेखनविषये प्रथममक्षराणि भूमौ, तद
यथाऽभ्यासपाटवं शिलापट्टके, ततः पत्रेषु लिखित्वा विद्यार्थिभिरभ्यास
क्रियते।

४—ग्राम्यपाठशालासु प्राय एक एव गुरुर्भवति। स नाधिकविद्य
शाली, परं पाठनीयविषयं साधु जानन् भवति स्म। स च दृढस्वभाव
शासनदक्षः, दयालुश्च प्रशस्यते। विद्यार्थिनश्च तदीयामाज्ञां भयेन या
तांशेन पालयन्ति न तावत्यंशे प्रणयेन। स च महाशयः स्वविद्यार्थि
योगक्षेमं सर्वांशेनानुसन्धत्ते, येन विद्यार्थिनां हृदि तद्विषये निरु
भक्तिश्चिरमनुवर्त्तते, याऽऽधुनिकविद्यालयेषु गृहीतप्रवेशैरपि तच्छात्रै
विस्मर्यते।

५—पाठशालाशिक्षकाः प्रायो निःस्वा एव भवन्ति। ते किमपि वेत
नियतं नासादयन्ति। विद्यार्थिभिः प्रतिमाससर्पितैरल्पैः शुल्कैस्ते
जीविका चलति। एतदतिरिक्तं पर्यायक्रमेण भोज्यमन्नमपि विद्यार्थि
रुपहृतं तेषां जीविकां निर्वहति। पर्वसु विशिष्य समर्पितैर्द्रव्योपहारैस्तेष
मायस्य सुमहान् भागः समायाति। अल्पीयसि सामयिके चाये सन्तु
हृदयास्तेऽध्यापकाः स्वं जीवनं यापयन्तो ग्रामवासिनां बालान् शिक्ष
सोपानमारोहयन्ति।

६—ग्राम्यपाठशालाया लाभः प्रचुरप्रकारको भवति। अत्र शिक्ष
स्वल्पव्ययेन लभ्यते। यो व्ययसाध्यां शिक्षामधिगन्तुमनीशस्तस्या
साक्षरताऽत्र जायते। प्रत्येकच्छात्राणां गुणावगुणौ ज्ञात्वाऽध्यापकमह
शयस्तस्य तस्य गुणस्य समृद्धये दोषाणामपचयाय च प्रयतते। ए
पाठशाला सारल्येन जीवननिर्वाहं मितव्ययशीलतां च शिक्षयित्वा भा
जीवनयात्रापथं प्रशस्तयति।

७—यद्यपि पाठशालासु प्रागुक्ता गुणा भवन्ति, परं तत्र दोषा अ
सन्ति। एक एवाध्यापकः सर्वेषामपि विद्यार्थिनां सर्वेष्वप्यंशेषु स

चितां शिक्षां समुचितेनोपयुक्तेनैव च कालेन विदध्यादिदं न सम्भवति। किन्त्वेकस्यैवाध्यापकस्य सुगुणदुर्गुणौ द्रष्टुमवसरं लभमानाश्छात्रास्तमेवादर्शं स्थिरयन्ति। ईदृशपाठशालासु पाठ्यक्रमोऽपि निश्चितो न भवति। पाठशालाऽध्यापकाश्च प्रायेणालसा दृश्यन्ते। गुरुमहाशय एव पाठशालायाः सर्वमधिकारं धारयतीत्यनेनापि कतिपये दोषाः सम्भवन्ति।

८—सम्प्रति ग्राम्यपाठशालानां ह्रासस्य समयः समुपस्थितः। नवीनयुगस्य नीतिरीतो अनुसृत्य चालिता एव शिक्षणालयाः सर्वत्र स्थाप्यन्ते, ग्राम्यपाठशाला यत्र विद्यतेऽपि तत्रापि तस्या अवस्था शोचनीयैव। तदीयान् दोषान्दूरीकर्तुं प्रयस्य यदि पुनः प्रतिग्रामं प्रतिपल्लि च तासां प्रतिष्ठापनं क्रियते, महानुपकारः कृतो भवति भारतवर्षस्य दरिद्रतयोष्णं निःश्वसतः स्वां सन्ततिं शिक्षयित्वैव सम्भाव्यमानमुदयं कामयमानस्य। तथाऽस्तु। पाठशाला मल्लशाला ग्रामे ग्रामे च जायताम्।

## २. समाचापत्राणि

( १ समाचारपत्रपरिभाषा, २ कैरेतानि लिख्यन्ते, ३ एषामुद्भवस्येतिहासः, ४ भारतीयसमाचारपत्राणां कर्त्तव्यम्, ५ एषामुपयोगिता, ६ उपसंहारः। )

१—यानि लघूनि बृहदाकाराणि वा पुस्तकानि नियततिथिषु भिन्नभिन्नस्थानानां समाचारान् सङ्कलय्य सम्पाद्य च मुद्रितानि कृत्वा विक्रीयन्ते तानि समाचारपत्राणि कथ्यन्ते। एषु केवलं समाचारा एव न भवन्ति, किन्तु मानसिक-चारित्रिक-व्यावहारिक-समुत्कर्षसम्पादका विचारा अपि प्रकाश्यन्ते। एषु कतिचित् साप्ताहिकानि भवन्ति, कतिचिदर्धसाप्ताहिकानि, दैनिकानि च। विदेशेषु त्वर्धदैनिकानि पत्राण्यपि प्रकाश्यन्ते। मासिकत्रैमासिकषाण्मासिकवार्षिकपत्राणां तु पुस्तकतया परिगणनमेव समुचितं तेषु समाचारस्यानादरणीयत्वोल्लेखप्रबन्धप्रकाशनस्यैव तेषामुद्देश्यत्वात्।

२—एषां समाचारपत्राणां न कश्चिदेको नियतो लेखकः, परन्तु भिन्नभिन्नपुरुषैर्लिख्यमानानां लेखानां सम्पादनाय कश्चिदेकः प्रधानसम्पादकस्तिष्ठति, यो रीतिं नीतिं च नियमयति। स एव च तत्र प्रकाश्यमानानामर्थानामुत्तरदायी मन्यते।

३—सर्वप्रथमं समाचारपत्रं वेनिस-( इटाली )-नगरे प्रकाशमासादयत्। तदुद्भवाल्लाभान् दृष्ट्वा यूरोपस्य सर्वे देशाः समाचारपत्राणां प्रकाशनमारब्धवन्तः। महाराज्ञ्या एलिजावेथनाम्न्याः शासनकाले इङ्गलेण्डदेशे सर्वप्रथमस्य समाचारपत्रस्य प्रकाशनं प्रारभ्यत। अस्माकं देशे भारते तु १७४० तमेशवीयवर्षे 'इण्डिया गजेट' नामकस्य पत्रस्य प्रकाशनं प्रावर्त्तत। सम्प्रति तु सङ्ख्याऽमीषां सहस्रमप्यतिशेते। परमियमपि संख्या देशान्तरीयपत्रसङ्ख्यया तुलनायां लघुतरैव।

४—सर्वेषामपि समाचारपत्राणां कर्त्तव्यतया निर्धारितमुद्देश्यं भिन्नं भिन्नं भवति। किमपि राज्ञो जनतायाश्च वृत्तमन्योन्यस्य समीपे समुपस्थापयति' येन तदीयं पारस्परिकं मालिन्यमपयाति। किञ्चिच्च पत्रं सदा जागरूकं सद् देशस्य राजनीतिकीं गतिं नियन्त्रयति। किञ्चन च धार्मिकीं स्थितिं समेधयति। एवमन्यत्। सम्प्रति प्रायः प्रचलितेयं परिपाटी यद्या संस्था स्वीयं प्रचुरं प्रचारमिच्छति तस्या मुखपत्रं प्रचरत्येव, येन तदीयमभिमतं जनानां पुरः स्थाप्यते। समाचारपत्रे राजनो नियम्यन्ते, शासनसूत्रं तथा समालोच्यते यथा नापैति पथः। एकत्राविष्कृतस्य कस्यापि पदार्थस्य यन्त्रस्य वा प्रचारः समाचारपत्रैरेव क्रियते येन तन्मूल्यं वर्द्धते, तदाविष्कर्तुश्च प्रतिष्ठा समेधते। देश-विदेशभवानतिप्रयोजनीयान् वृत्तान्तान् ज्ञातुमपि पन्थाः सरलतया पत्राण्येव।

५—समाचारपत्राणां कर्त्तव्येषु दृष्टिं ददतां कृते तदुपयोगिता न दुरूहा। एतैर्हि लोकरुचिः प्रकाशिता क्रियते शासनं च सरलतां नीयते। दुष्पथप्रवृत्तं शासकमण्डलमङ्कुशेनेवाकृष्य प्रकृतौ स्थापयितुमेषां महानुपयोगः।

तत्र स्थितौ सम्पादका दण्डमपि लभन्ते। परं तु सम्पादकैः सदा निर्भीकैः सत्यव्यवहारिभिः विघ्नबाधासहिष्णुस्वभावैश्च भाव्यम्। एवं सत्येव पत्रस्य गौरवं भवति।

६—भारतीयानि बहूनि पत्राणि कस्यचिदेकस्य प्रधानपुरुषस्य समुत्साहमेवाधारं कृत्वा प्रकाशमासादयन्ति, तेन तदीयोत्साहसमाप्तौ तदायुरपि समाप्नोति। यथा स्व० हृषीकेशशास्त्रिणां 'विद्योदयः', म० म० विधुशेखरशर्मणां 'मित्रगोष्ठी', म० म० मुरलीधरशर्मणां 'सिथिलामोदः', 'प्रदीपः', 'अमरभारती' च। पाश्चात्त्यदेशेषु नेदृशी स्थितिः। तत्र ग्राहकाणां सङ्ख्या भूयसी भवति, येनार्थिककष्टं नोपतिष्ठतेऽतोऽन्येऽन्ये प्रकाशकप्रबन्धकाः सदा समुद्यता एव तिष्ठन्ति। पश्यामो भगवान् भारते कदा तामवस्थामानयति।



## ३. मुद्रणकला

( १ पूर्वाभासः, २, मुद्रायन्त्रस्य सृष्टिः क्रमश उन्नतिश्च, ३ एतेनोपकारापकारौ, ४ उपसंहारः। )

१—शिक्षाविस्तारेण सममेव मानवजातेः सभ्यताऽपि दिनानुदिनमुत्कर्षं भजते। नानाप्रकाराणां यन्त्राणामविष्कारेणास्माकं सुखस्य स्वाच्छन्द्यस्य च पन्थाः प्रशस्ततां नीयते। गतशताब्दीत्रयस्याविष्कारा भावनावर्त्म नीता आश्चर्यमुत्पादयन्ति। यन्मुद्रणयन्त्रमधुना प्रतिपल्लि समुपलभ्यते, यदीयमुपयोगं प्रायः पांसुलपादो हालिकोऽपि जानाति, शताब्दीपञ्चकात्पूर्वं तस्य यादृशी स्थितिरासीत्तां भावयन्तोऽपि सम्प्रति विस्मयते मनः। मानवीयसभ्यताविकाससाधनानि यावन्ति यन्त्राणि प्रकटीकृतानि तेषु मुद्रायन्त्रं प्रधानतममत्र न प्रायो विप्रतिपद्यन्ते विपश्चितः।

२—ईशवीयनवमशताब्द्यां चीनदेशे मुद्रायन्त्रस्य प्रथमः प्रयोगः

प्रारब्धः। तस्मिन् काले तत्र काष्ठफलकखण्डेषु ( चित्राकाराणि ची
देशीयानि ) अक्षराणि क्षुण्णानि । तैरेव च मुद्रणकार्यं समपाद्य
पञ्चदशेशवीयशताब्द्यां यूरोपदेशेषु मुद्रणं प्रारब्धम् । जर्मनदेश
स्याः कलाया उन्नतौ मुख्यं भागमधित । प्रख्यातः शिल्पी 'स्टेनहे
महोदयो मुद्रणयन्त्रं निर्माय समाचारपत्राणि पुस्तकानि च प्रका
यत् । अस्माकं देशे तु १६ शताब्द्या मध्यभागं यावत् कोपि मु
प्रबन्धो नासीत् । तदनन्तरमपि शिलालिपिः प्रचरिता, या नातिसु
राकृतिश्चिरसाध्या चासीत् । सप्तदशशताब्द्या अवसाने कथञ्चित् मु
णकार्यं लौहमयैरक्षरैः प्रारब्धम् । ( स्टीम ) बाष्पीयमुद्रणयन्त्रं तु ऊन
विंशशताब्द्यां जगति जातप्रकाशमिति विदन्ति विज्ञाः । सम्प्रति तु अस्य
विज्ञानस्यैतावान् परिष्कारो जातो यदेकदोपयुज्यमानमक्षरं तत्क्षणमेव
विलाप्य तदग्रे पुनरुपयोजयितुं निर्मान्ति नवमक्षरं ( तेन द्रुतद्रव्येण )
यन्त्राणि । पुनरेकदा कृतमुद्रणं तु तदक्षरं प्रागुक्तदिशा विलाप्यते।
अधुनाऽवधि कृताविष्काराणां यद् यन्त्राणां ( Rotary Machine )
'रोटरी मैशिन' संज्ञया व्यवह्रियते ।

३—सम्प्रति मुद्रणकला ज्ञानविस्तारस्य प्रधानं साधनम् । प्राचीनकाले पुस्तकानि हस्तेन लिख्यन्ते स्म । तत्रैकस्यैव पुस्तकस्य लेखनेऽत्याधिकः कालोऽपेक्ष्यते स्म । तावता परिश्रमेण लिखितस्य पुस्तकस्य मूल्यमत्यधिकं भवति स्म, तथा च पुस्तकानां सङ्ग्रहोऽतिव्ययसाध्य आसीत्, तेन च ज्ञानसाधनाविद्योपार्जने सर्वेषां सामर्थ्यं नोपपद्यते स्म। जाते तु मुद्रायन्त्राविष्कारे कियतीभिरेव होराभिरेकस्य पुस्तकस्य लक्षाधिकाः प्रतयः सम्पाद्यन्ते, येनाल्पेन मूल्येन समयलाघवेन च ज्ञानं सुखमर्जयितुं शक्यते । मुद्रायन्त्राविष्कारात्पूर्वं कोऽपि कस्यापि कमपि समाचारं ( विना दूतप्रेषणं ) ज्ञातुं नाशकत् । समाचारपत्राणि न प्राकाश्यन्त । देशान्तराणां का कथा ? प्रान्तान्तराणामपि समाचारो ज्ञातुमशक्य एवाभवत् । यदि मुद्रायन्त्रस्याविष्कारो नाभविष्यन्नूनमस्माकं ज्ञानराशेः प्राचीनग्रन्थनिवहस्य कियान् भागः काल-

हिम्ना कटुकीटपटलसन्दंशनेन पाथःपृषतपातेन वाऽलोप्स्यत।

मुद्रायन्त्रस्य कृपया येन प्रकारेण देशस्य तावन्त उपकारा जाताः, ानविस्तारस्य पन्थाः सरलीकृतः, तथैव कियतांशेन हानिरपि जाता। क्यन्ति कुरुचिपूर्णानि सद्भिर्गर्हितान्यश्लीलानि च पुस्तकानि प्रकाश-ानीतानि येन मानसिकी स्थितिः कलुषीक्रियते। परं हानिरल्पी-सी, लाभस्य तुलनायामगण्या। सर्वथा निर्दोषं वस्तु प्रायो गुणदोषमये ररश्चिप्रपञ्चे नैवास्ति।

४—इदं मुद्रणयन्त्रमस्माकं ज्ञानमवर्द्धयत्। विदेशीयैर्देशीयैश्च द्वद्भिः सह परिचयमकारयत्। धर्मग्रन्थानरक्षत्। किञ्च संसार-ात्रायाः पन्थानं सरलमकार्षीत्। सत्यं! मुद्रणयन्त्रं मानवसभ्यतायाः ेष्ठः स्तम्भः।

## ४. परोपकाराय सतां विभूतयः

अथवा

## परोपकारः

(१ पूर्वाभासः, २ परोपकारः प्रकृत्याऽपि शिष्यते, ३ परोपकारेण लाभः, ४ उपकारः कथं क्रियते? ५ क उपकारस्य पात्रम्? ६ उपसंहारः।)

१—किमपि प्रत्यर्पणमनभिलष्य परकीयहितानुसन्धानं परोपकारः। मनुष्येषु श्रेष्ठतायाः साधनानि यान्यपेक्षितानि तेषु प्राधान्यं परोपकार-स्य। येषु मनुष्येषु गुणोऽयं नास्ति तान् मनुष्यतनुमाधाय चरतः पशूनेवाभिधातुं ममात्मनो निर्बन्धः।

२—उचितमिदं यद्वयं प्रकृतेः सकाशात् परोपकारस्य शिक्षामुपाददी-महि। इयं पृथ्वी किमस्मभ्यं न ददाति? भोजनं धरैव ददाति। पृथ्वी एव जलं पाययति। किञ्च नानाविधं शीतमातपं च सहमानाऽस्माकं मनः प्रसादयितुं प्रयतते। प्रातः प्राप्तोदयः सूर्यः सम्पूर्णमपि दिनं वियति भ्रमन् प्रकाशमर्पयति नः। सुधादीधितिश्चायं सुधयाऽस्मान् प्रीणयति एते च पृथ्वीसूर्यचन्द्राः किमपि नास्मभ्यमभिलषन्ति।

३—परोपकारात् प्रबलं किमपि पुण्यमत्र जगति नास्ति। एष मानवानां हृदये पवित्रतां, सहनशीलतां, दयां, भक्ति, प्रमाणं च प्रादुर्भावयति। एतान् हि गुणान् विना शुनो मार्जारान् वा किमिति हसेम वयम्, तेऽपि तु खादन्ति, शेरते, जाग्रति च।

४—बुभुक्षितेभ्यो भोजनस्य, पिपासितेभ्यः पयसः, वस्त्रहीनेभ्यो वस्त्रस्य दानम्। येषां प्राणाः सङ्कटे सन्ति तेषां प्राणत्राणम्। जीवमात्रं प्रति तदाशापूरकसहयोगप्रदानं चोपकारिणां प्रधानं करणीयम्। किञ्च विद्यादानमपि परोपकारस्य श्रेष्ठो मार्गः। दत्तं भोजनं वस्त्रं च कियतः कालस्य कृते तदावश्यकतां शमयति, परं विद्या मनुजानां जीवनसहचरी सती तान् सुखयति।

५—यदि वयं धनिकेभ्यो धनं दद्मो न तेन तेषां किमपि फलं जायते, समुद्रे वर्षणमिव तदनतिप्रयोजनकतां प्रतिपद्यते। एवमेव यः स्वबाह्वोः श्रमेण भोजनमर्जयितुं क्षमस्तस्मै भोजनप्रदानं परोपकारस्य कोटौ नायाति, प्रत्युत तथाविधानामलसानां सङ्ख्यां वर्द्धयेत्। अत उपकाराय प्रवर्त्तमानैः प्रथममिदं विचारणीयं यत् कस्मै किमर्प्यताम्, कस्य वस्तुनः कस्मै आवश्यकता ? अक्षिणी निमील्य कस्मैचित् कस्यचिद्वस्तुनः प्रदानं परोपकारस्य संज्ञां नार्हति। अत एवोपकारकाले पात्रविवेकः परमापेक्षितः पदार्थः। ये सबलस्वस्थतनवस्ते जीवनयात्रायास्साधने तादृशे वर्त्मनि योजनीया ये तत्र साफल्यमासाद्य सुखिनो जायेरन्। शास्त्रेषु परोपकारस्य महती प्रशंसा कृता। तथा हि

'अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥' इति।

भारते शिविः, दधीचिः, दिलीपः, इत्यादयो बहवः परोपकारि महात्मानो जाताः, ये जीवानामुपकारार्थं स्वं सुखं शरीरं चापि तृणममन्यन्त। दधीचे! धन्योऽसि, यस्त्वं परेषां प्राणान् परित्रातुं स्वर्मा समर्पितवान्। त्वादृशानामेव महात्मनां यशः श्रद्धया गायति त्रिलोक

'परोपकरणं येषां जागर्त्ति हृदये सताम् ।
नश्यन्ति विपदस्तेषां सम्पदस्तु पदे पदे ॥'

६—इत्थं परोपकारस्य सर्वाङ्गीणं स्वरूपं मङ्गलमयमवगत्य यथाशक्ति तत्र वर्त्मनि स्थेयं विचारचतुरैः । सदा मनसि स्थापनीयं—धिक् स्वोदरैकभृतिमात्रकदर्यान् ।

—:०:—

## ५. एकता

( १ परिभाषा, २ एकता कीदृशीं शक्तिं रचति ? ३ एकताया उपकारः, ४ उदाहरणम्, ५ उपसंहारः । )

१—कस्यचिदेकस्य निश्चितोद्देश्यस्य साधनाय बहूनां जनानां विहाय बुद्धिभेदमैकमत्येन प्रवृत्तिमेकतामाहुः । यद्वा, निश्चितकार्यविशेषं प्रति सत्यपि कार्यान्तरविषयकमतभेदे तत्साधनप्रवृत्तानामेकबुद्धिकतामेकतां ब्रुवते ।

२—एकताया शक्तिरतुला वर्त्तते, येनैकेन तृणेन लघुरेकः कीटोऽपि न बध्यते, तस्यैव समूहेन मत्तदन्तिनोऽपि सुखेन बद्धयन्ते । जलस्यैको बिन्दुः कस्मैचिदपि कार्याय नालम्, परं तस्यैव समुदायो नदीभावमापन्नः प्रबलेन वेगेन वहमानः क्षितिधरानपि मार्गरुधो भित्त्वा निर्याति, देशं प्लावयति, तालतरूनपि तिरोधापयति । इयमेव दशा प्राणिनामपि । यदा कोऽपि सङ्घः कस्मैचिदपि कार्याय सन्नह्यति तदा तत्कार्यं सिध्यत्येव । तदन्तःपातिना चैकेन शतशः प्रयतमानेनापि न कर्त्तुं शक्यते । पिपीलिकाऽतिलघुर्जीवः, सा ( एका ) तृणखण्डमपि न वोढुं क्षमा, परं तस्या एष सङ्घः कोशमपि विषधरं बद्ध्वा भक्षयति । अत इदं सिद्ध्यति यदेकेनासाध्यं कार्यमपि ( एकताशालिना ) तत्समुदायेन सुखं सम्पाद्यत इति ।

३—सर्वेष्वपि कार्येषु सिद्धिसाधने प्रबलं साधनमेकतैव विद्यते । यदि कस्मिन्नपि जनसमुदायेऽस्ति तदा सांसारिकं पारलौकिकं सर्वमपि कार्यं सिद्ध्यति सुखं सम्पद्येत । यदि दरिद्रपरिवारेऽपि परस्परमैक्यं भवे-

त्तदा तत्रापि शान्तिसुखावासः। एकताया अभावे तु कोऽपि केनापि सह कामपि सहानुभूतिं न रक्षति, भ्राता भ्रातुः कृते स्वार्थं न त्यजति तदा राजप्रासादेऽपि सुखं नोपलभ्यते इन्द्रभवनमपि श्मशानभयङ्करं प्रतिभाति।

यस्मिन् समाजे ऐक्यं नास्ति तस्य दुर्बलस्य समाजस्य पतनमवश्यंभावि। स कदाऽपि सम्पदुन्नत्योर्मुखं न वीक्षिता। एकताया अभावे समाजस्य का गतिर्भवति, देशस्य कीदृशो दुरवस्था भवति, नात्र दृष्टान्तान्वेषणाय बहुचिन्तनीयम्, अत्र अस्माकं देश एवोदाहरणम्।

४—इतिहासानां विलोकनेन ज्ञायते यद् यत्र गृहे, समाजे, जातौ वा एकता विद्यते तदेव गृहं, स एव समाजः, सैव च जातिरभ्युदयशालिनी वर्त्तते। अत्रास्माकं भूतपूर्वशासिका अङ्ग्रेजजातिरेवोदाहरणम्। इयं जातिरेकतयैव जगति सर्वापेक्षया गौरवस्योच्चं स्थानमासाद्य राज्यं विस्तारयन्ती स्वामेकतां तत्समेधितां क्षमतां च प्रत्याययति। इयम् अङ्ग्रेजजातिर्यत्र कार्ये करं व्यापारयति, सर्वत्र तत्र स्वदेशस्य गौरवरक्षार्थं प्रस्तुता तिष्ठति। स्वदेशगौरवरक्षार्थं स्वानसूनपि विस्रष्टुं सदा सज्जा तिष्ठति।

५—एकताया एतादृशो महिमा, ईदृशं चेदं रत्नं, परं खेदस्यायं विषयो यदस्माकं देशो नेत्रयोः पुरतो बहूनि तदुदाहरणानि पश्यन्नपि न पश्यति, चकितहरिणशावकनयनतुलितमक्षियुगलं दधानोऽपि एकताया अभावेऽहरहर्भवन्तीमात्मनोऽधोगतिं न वीक्षते। भगवान् अतिशीघ्रमस्माकं देशे एकतामुद्भावयतु।



## ६. आवश्यकताऽऽविष्काराणां जननी भवति

( १ परिचयः, २ आविष्काराणां क्रमः, ३ बाह्यावश्यकतानामिव मानसिकावश्यकतानामपि आविष्कारे सहायता, ४ उपसंहारः। )

१—यानि वस्तूनि स्वप्नेऽपि नानुभूतानि, येषां स्वरूपस्य कल्पनाऽपि मानसं नावगाहते स्म, यदि प्रकृत्या तेषामावश्यकता कस्यापक्ति

सूयते तानि वस्तूनि निर्मातुं स प्रवर्त्तते, अयमेवार्थो विवेच्यतया शीर्षस्थाने लिखितस्यास्य प्रबन्धविषयस्य। यदि वयं पुरातनयुगेतिहासेषु दृष्टिं क्षिपामः—यदा सभ्यता–प्रारम्भोऽपि नासीत्, आविष्कारा आवश्यकतयैव प्रसूता इदं स्पष्टमवगच्छामः। तस्मिन् समये मनुष्याः पशुवद् वर्त्तन्ते स्म, पत्रेषु भुञ्जते स्म, वस्त्राणामुपयोगं नाज्ञासिषुः, वृक्षशाखासु कुशकासादिसङ्कुलायां वा धरायामशयिषत। तेऽस्त्राणामुपयोगं वह्निकार्यं च नाविदन्। परमयं समयोऽपगतः, क्रमशस्त एव मानवाः शीतातपवात्याभ्यः स्वं गोपायितुं गृहस्यावश्यकतामनुभवितुमारभन्त, ततश्च गृहनिर्माणप्रक्रियामुदभावयन्, एवं वस्त्राणां स्थाने पशूनां चर्माणि समुपायुञ्जत। यदा च मनुष्याः परेभ्यः स्वस्य रक्षाया आवश्यकतां मनसि विविदुः भोजनार्थं पशूनां मांसं चापेक्षितवन्तस्तदनन्तरं प्रस्तरखण्डानि तेष्वेव सङ्घृष्य नानाविधानि शस्त्राण्यस्त्राणि च निरमायिषुर्यैर्भेदनच्छेदनादिकार्यं सुकरं समवद्यत। कतिचिद्वत्सराणि आममांसमश्नतां तेषां जाते मुखवैरस्ये ते पाकक्रियाया आवश्यकतां निरधारयन् यतस्ते पाकप्रक्रियामनुसमधिषत।

२—उपर्युक्ताद्विवरणादिदमवधार्यते यदतिभूमिङ्गताऽऽवश्यकता, नान्तरीयकता, किमपि वस्तु बलादिवाविष्कारयति। एवं हि वस्तुस्थितिः—कोऽपि किमपि वस्तु विना कस्याश्चित् कठिनायां स्थितौ पतति, न चोपलभते प्रतिकारपथम्, विमनायते च तदनुपलब्ध्या, ततः कञ्चनोपायं तत्प्रतीकारस्य सर्वात्मना चिन्तयति लभते च तदुपाया एवाविष्कारस्वरूपतया परिणमन्ते। यदि मनुष्यः कश्चित् सर्वमपि मनोऽभिलषितं वस्तु सद्य एवाधिगच्छेत्, न प्रतिबद्धमनोरथतया खिद्येत, किमर्थं स व्याप्रियेत चेतसि, कुतश्च निर्गच्छेयुर्नवाः पदार्थाः। परमत्र प्रतिक्षणं नूतनतामर्थयमाने जगति केवलं भोजनेनाच्छादनेनैव च मानवस्य तृष्णा नोपशाम्यति। स किमप्यन्यदपि कामयते, तदर्थमपि तस्य बुद्धिर्व्याप्रियते ततोऽपि च बहव आविष्कारा जन्म लभन्ते।

३—अत्र जगति बहव ईदृशा अपि सन्ति पदार्था येषामाविष्कारो नावश्यकतापारवश्यकृतः, यथा बाष्पशक्तिविद्युदादिकाः पदार्थाः, तान् न्तराऽपि मनुष्याणां जीवनं न प्रत्यबध्यत, भोजनादिकमेव वा न न्यरु ध्यत, एवं च प्रतिवक्तव्यं यद् मानवानामावश्यकता न केवलं कायिक्य एव भवन्ति, ते मानसिकभोजनं लब्धुं प्रयतन्ते जातेऽपि जीवनधारणो पाये। मानसिकं, तद्भोजनं च तदीयाविरतबुद्धिव्यापारप्रभावेण समुप ह्रियते, यदा च तेषामन्तरङ्गाणि मानसिकखाद्यान्वेषणाय व्याप्रियन्ते, तदाऽऽविष्कारा जन्म गृह्णन्ति, शब्दप्रसारणयन्त्रम्, वायुयानम्, तडि त्तन्त्रम्, इत्यादय एवंप्रकारा एव।

४—एवं हि श्रूयते कुत्रापि पर्वतशिखरे समासीन एकः काकः पिपासा क्षामकण्ठो भूमौ विवरे जलमपश्यत्, पर्वतशिखराच्च भुवमवततार। परं भुवि समवतीर्णस्यापि तस्य विवरस्थं जलं पातुं शक्तिर्नाभवत्। पिपासया पीडितश्च स इतस्ततः पश्यन्नपि किमपि वर्त्म नाद्राक्षीत्। जलं विना शुष्यदाननबिलस्य तस्य मनस्येक उपायः स्फुरति स्म। तत्र वर्त्तमानानि लघूनि प्रस्तरखण्डानि चञ्चुपुटेनादायादाय बिले क्षेप्तु मारभत, तेन बिले पूर्णे तत्रत्यं जलं बहिरभवत्, स काकः स्वां पिपासां शमितवान्। दृश्यतामत्र कथायामाविष्कारः कथमावश्यकतया बाधितेन काकेन व्यधीयत। यदि पक्षिष्वेवं, का कथा पुरुषाणाम्?। 'थौमस एडि सन' महोदयः कियतांशेन बधिरोऽतः शब्दव्यापारान्वेषणाप्रवृत्तश्चासीत्, अनुसन्धानप्रवृत्तेनैव च तेन 'फोनोग्राफ' नामकं यन्त्रमाविष्कृतं यदधुना प्रतिपल्लि लब्धसञ्चारम्। अस्माकमेव देशस्यालङ्कारः श्रीमान् इन्दुमाधव मल्लिकमहोदयः स्वयं प्रवाहिकया पीडित आसीत्, स सुपचं भोजनं पक्तुं प्रकारमनुसन्दधान एकं यन्त्रमाविष्कृतवान् यदधुना जनाः 'कूकॉर' नाम्ना व्यवहरन्ति।

५—एतावता समर्थितं साधु तथ्यमिदं यद् यदा काऽपि परमावश्य कतापुमांसं व्याकुलयति तदा तदीया मतिर्न विश्राममधिगच्छति, अविश्रान्तं

व्याप्रियमाणा च सा मतिः सुप्तां स्वां शक्तिमुद्बोधयति, तत्प्रभावेणैव वालसाः सव्यापाराः, दुर्बला बलवन्तः, अविचारका विचारचतुराश्च सम्पद्यन्ते। जगतः सर्वोऽपि व्यापार आवश्यकताप्रसूत एव। यद्यावश्यकता दिनानुदिनं नैधेत, यथाऽवस्थितमिदं जगत् पदमपि पुरतो न स्पन्देत। प्रतिदिनं वर्द्धमाना जनसंख्याऽऽवश्यकतां वर्द्धयन्ती संहारकराण्यस्त्राण्यपि समुत्पादयति। अतः साधु समर्थितमिदं—

'यदाविष्कारा आवश्यकतया जन्यन्त' इति।

---

## ७. व्यापारः

१ परिचयः, २ व्यापाराल्लाभः, ३ हानिः, उपसंहारः।

१—एकस्य स्थानस्य देशस्य वा वस्तु स्थानान्तरे देशान्तरे चोपयोगार्थं क्रीत्वा नीयते यत्स व्यापारः। एवमेव स्वयमुत्पादितस्य क्रीतस्य वा वस्तुनः परकीयं धनमादाय विक्रयोऽपि व्यापारः। तत्र प्रथमः क्रेतुर्व्यापारोऽपरश्चोत्पाद्य क्रीत्वा विक्रेतुः। देशस्य स्थितेर्भेदात् किञ्चिद्वस्तु कुत्रचिदावश्यकताया अधिकमुत्पद्यते किञ्चिदत्यपेक्षितमप्यत्यल्पम्। यथाऽस्माकमेव देशे पञ्चनदप्रान्ते गोधूमस्याधिक्यम्, वङ्गप्रान्ते च तण्डुलस्य। एवं पञ्चनदप्रान्ते तण्डुलानां न्यूनता, वङ्गप्रान्ते च गोधूमस्य। परमावश्यकतोभयत्रापि द्वयोरपि वस्तुनोर्भवत्येव। तेन वङ्गप्रान्तः पञ्चनदप्रान्ताद् गोधूममानयति, पञ्चनदप्रान्तश्च वङ्गदेशात्तण्डुलान्।

एकतः स्थानादानयनम्—'आयातम्' निर्गमञ्च 'निर्यातम्' कथयन्ति व्यापारविदः एवञ्च द्वयम्—आयातम्, निर्यातञ्चेदं मिलित्वा 'व्यापारः' नामभिधीयते। सम्प्रति कस्यापि देशस्य कार्यं व्यापारं विना चलत्येव न हि। यथा जीवनोपयोगि [illegible] भारतं भोगविलाससामग्रीणां कृते देशान्तरेण व्यापारं करोति।

३—अत्र जगति बहव ईदृशा अपि सन्ति पदार्था येषामाविष्कानावश्यकतापारवश्यकृतः, यथा बाष्पशक्तिविद्युदादिकाः पदार्थाः, तान्तराऽपि मनुष्याणां जीवनं न प्रत्यबध्यत, भोजनादिकमेव वा न न्यध्यत, एवं च प्रतिवक्तव्यं यद् मानवानामावश्यकता न केवलं कायिक्य एव भवन्ति, ते मानसिकभोजनं लब्धुं प्रयतन्ते जातेऽपि जीवनधारणोपाये। मानसिकं, तद्भोजनं च तदीयाविरतबुद्धिव्यापारप्रभावेण समुपह्रियते, यदा च तेषामन्तरङ्गाणि मानसिकखाद्यान्वेषणाय व्याप्रियन्ते, तदाऽऽविष्कारा जन्म गृह्णन्ति, शब्दप्रसारणयन्त्रम्, वायुयानम्, तडिद्यन्त्रम्, इत्यादय एवंप्रकारा एव।

४ एवं हि श्रूयते कुत्रापि पर्वतशिखरे समासीन एकः काकः पिपासाक्षामकण्ठो भूमौ विवरे जलमपश्यत्, पर्वतशिखराच्च भुवमवततार। परं भुवि समवतीर्णस्यापि तस्य विवरस्थं जलं पातुं शक्तिर्नाभवत्। पिपासया पीडितश्च स इतस्ततः पश्यन्नपि किमपि वर्त्म नाद्राक्षीत्। जलं विना शुष्यदाननबिलस्य तस्य मनस्येक उपायः स्फुरति स्म। तत्र वर्त्तमानानि लघूनि प्रस्तरखण्डानि चञ्चुपुटेनादायादाय बिले क्षेप्तुमारभत, तेन बिले पूर्णे तत्रत्यं जलं बहिरभवत्, स काकः स्वां पिपासां शमितवान्। दृश्यतामत्र कथायामाविष्कारः कथमावश्यकतया बाधितेन काकेन व्यधीयत। यदि पक्षिष्वेवं, का कथा पुरुषाणाम्?। 'थौमस एडिसन' महोदयः कियतांशेन बधिरोऽतः शब्दव्यापारान्वेषणाप्रवृत्तश्चासीत्, अनुसन्धानप्रवृत्तेनैव च तेन 'फोनोग्राफ' नामकं यन्त्रमाविष्कृतं यदधुना प्रतिपल्लि लब्धसञ्चारम्। अस्माकमेव देशस्यालङ्कारः श्रीमान् इन्दुमाधवमल्लिकमहोदयः स्वयं प्रवाहिकया पीडित आसीत्, स सुपचं भोजनं पक्तुं प्रकारमनुसन्दधान एकं यन्त्रमाविष्कृतवान् यदधुना जनाः 'कूकॉर' नाम्ना व्यवहरन्ति।

५—एतावता समर्थितं साधु तथ्यमिदं यद् यदा काऽपि परमावश्यकतापुमांसं व्याकुलयति तदा तदीया मतिर्न विश्राममधिगच्छति, अविश्रान्त

व्याप्रियमाणा च सा मतिः सुप्तां स्वां शक्तिमुद्बोधयति, तत्प्रभावेणैव चालसाः सव्यापाराः, दुर्बला बलवन्तः, अविचारका विचारचतुराश्च सम्पद्यन्ते। जगतः सर्वोऽपि व्यापार आवश्यकताप्रसूत एव। यद्यावश्यकता दिनानुदिनं नैधेत, यथाऽवस्थितमिदं जगत् पदमपि पुरतो न स्पन्देत। प्रतिदिनं वर्द्धमाना जनसंख्याऽऽवश्यकतां वर्द्धयन्ती संहारकराण्यस्त्राण्यपि समुत्पादयति। अतः साधु समर्थितमिदं—

'यदाविष्कारा आवश्यकतया जन्यन्त' इति।

---

## ७. व्यापारः

१ परिचयः, २ व्यापाराल्लाभः, ३ हानिः, उपसंहारः।

१—एकस्य स्थानस्य देशस्य वा वस्तु स्थानान्तरे देशान्तरे चोपयोगार्थं क्रीत्वा नीयते यत्स व्यापारः। एवमेव स्वयमुत्पादितस्य क्रीतस्य वा वस्तुनः परकोयं धनमादाय विक्रयोऽपि व्यापारः। तत्र प्रथमः क्रेतुर्व्यापारोऽपरश्चोत्पाद्य क्रीत्वा विक्रेतुः। देशस्य स्थितेर्भेदात् किञ्चिद्वस्तु कुत्रचिदावश्यकताया अधिकमुत्पद्यते किञ्चिदत्यपेक्षितमप्यत्यल्पम्। यथाऽस्माकमेव देशे पञ्चनदप्रान्ते गोधूमस्याधिक्यम्, वङ्गप्रान्ते च तण्डुलस्य। एवं पञ्चनदप्रान्ते तण्डुलानां न्यूनता, वङ्गप्रान्ते च गोधूमस्य। परमावश्यकतोभयत्रापि द्वयोरपि वस्तुनोर्भवत्येव। तेन वङ्गप्रान्तः पञ्चनदप्रान्ताद् गोधूममानयति, पञ्चनदप्रान्तश्च वङ्गतस्तण्डुलान्।

एकतः स्थानादानयनम्—'आयातम्' निर्गमञ्च 'निर्यातम्' कथयन्ति व्यापारविदः एवञ्च द्वयम्—आयातम्, निर्यातञ्चेदं मिलित्वा 'व्यापारः' समभिधीयते। सम्प्रति कस्यापि देशस्य कार्यं व्यापारं विना चलत्येव न हि। यथा जीवनोपयोगिसर्वविधसामग्रीसम्पन्नमपि भारतं क्रीडाविलाससामग्रीणां कृते देशान्तरस्य व्यापारं वर्द्धयति।

यदि रूसदेशे तैलमधिकमुत्पद्यते कार्पासं च नास्ति तदा तेन तैलं दत्त्वा कुतोऽपि देशात्कार्पासमासादनीयमेव। व्यापारः स्वेन प्रचारेण, कस्यापि देशस्यांशे प्राकृत्याऽनुपहृतमपि वस्तु समर्पयति येन तस्यावश्यकता पूर्यते।

२—व्यापारान्नानाप्रकारको लाभो भवति, कस्यापि देशस्य सम्पत्तिभौतिकी समुन्नतिश्चैकान्ततो व्यापारमेवाधारीकुरुते। 'व्यापारे वसति लक्ष्मीः' इयं प्राचीना सूक्तिर्यमर्थमभिधत्ते नासावंशतोऽपि सन्देहस्य पदम्। यदि वयं समृद्धेषु शक्तिशालीषु च 'अमरीका' 'ब्रिटेन' प्रभृतिदेशेषु दृष्टिं प्रक्षिपामः, तदा स्फुटमिदं प्रत्येतुमवसरं लभेमहि यत् सर्वाऽपि समृद्धिश्शक्तिश्चैषां व्यापारेणैव जनिता। ब्रिटिशजातीयाः पुरा व्यापारस्य कृत एव भारतं समायाताः। तस्मिन् काले तेषां व्यापारोऽपि लघुरेवास्त। परं क्रमशो व्यापारमुन्नमयन्तस्ते तन्महिम्नैव नष्टशासनसूत्रस्य देशस्य शासकाः समजायन्त। व्यापारेणैव 'अमरीका' देशो धनिकानां देशानां मूर्धन्यः समवर्त्तत प्राचीनतमयुगे भारतमपि परदेशेषु व्यापारं प्रसार्य धनिकत्वमासादितवत्।

न केवलं समृद्धिरेवैधते व्यापारेण, परं सभ्यताया अपि विकासे व्यापारेण साहायकमाचर्यते। यस्य देशस्य येन देशान्तरेण व्यापारसम्पर्को भवति तयोः परस्परं यातायातेन प्रवृत्तेन विचारस्य व्यवहारस्य चादानप्रदानयोर्जातियोः सभ्यता समेधते।

व्यापारेण 'अकार्यकता' दूरीक्रियते, यस्य देशस्य व्यापारः समृद्धः स स्वीयं वस्तु प्रचुरया मात्रया परदेशेषु प्रेषयितुमिच्छति प्रचुरवस्तुनिर्माणार्थं प्रचुरस्य जनसमूहस्य नियुक्तिरपेक्ष्यते, येन व्यर्थजीवनानामपि जनानां समयः सार्थकतां भजते, अन्येषु क्षेत्रेष्विवात्र क्षेत्रे वृत्तिसाङ्कर्यं वृत्तिकार्कश्यं वा न भवति, यथा यथा व्यापारपरा वर्द्धन्ते, देशः समृद्ध्यति, व्यापारान्तराणि च प्रसूयन्ते।

३—व्यापाराल्लाभा भूयांसो दर्शिताः, परं हानिरपि भवति ततः। व्यापारेण धनवृद्धौ जातायां देशस्य विलासिताऽतिभूमिमृच्छति। यथा-

यथा भौतिकी वृद्धिर्भवति तथा तथाऽध्यात्मिकी शक्तिरपचीयते। परं 'विधातुर्हि सृष्टिरेव मधुरविधुरमिश्रा' अतो दोषाः सन्तीति कृत्वा व्यापारो न त्याज्यतामर्हति, न हि गावः सन्तीति यवा नोप्यन्ते। अल्प-दोषो बहुगुणः पदार्थ सदा सदादरपात्रमेव भवति। अतः सर्वं राष्ट्रै-रात्मोन्नतये व्यापारः समेधनीयस्तेन विनोन्नतेरसम्भवात्। भगवान् भारतीयमपि व्यापारमुन्नमयतु।

## ८. अनुशासनम्

१ परिचयः, २ नानाक्षेत्रेष्वनुशासनस्यावश्यकता, ३ लाभः, ४ उपसंहारः।

१—कस्यापि व्यवस्थितस्य नियमसमुदायस्य पालनमनुशासनमु-च्यते, अथवा कस्यापि नियन्तृतया नियुक्तस्य वचसोऽनुवर्त्तनमनुशा-सनम्। एकमपि प्रश्नमकृत्वा तदनुवृत्तिः साधीयसोऽनुशासनस्य स्वरूपमवधार्यम्। काऽपि व्यवस्थिता संस्थाऽनुशासनं विना न प्रचलितुम् पारयति। तद्विना तस्या गतिरतीव दुरन्ता जायते। यथा नावि निय-ताः कूपदण्डाः, चालनदारवः, प्रसार्यमाणवस्त्रप्रसारसङ्कोचरज्जवो वा यदि नियमपूर्वकं न चाल्येरन् मध्येसरिन्नौविपद्येत, तथैव ते ते पुरुषा यदि दलप्रधानमक्षरशो नानुवर्त्तेरन् कोऽपि समुदायः सफलप्रयासो न भवेत्। अस्माकं जीवनस्य सर्वास्वपि दशासु प्रकाममावश्यककमनु-शासनं नाम। बाल्ये, यौवने, प्रौढत्वे, वार्द्धकेऽपि वाऽनुशासनमपेक्ष्यत एव। विद्यालये, गृहे, सार्वजनिकसंस्थासु विनाऽदः कार्यं न चलति। बालको जातमात्र एवानुशासनं शिक्षणीयः। एतेन तस्य भाविजीवनं तस्मै महत्त्वमुपहरिष्यति।

२—एको बालो योऽनुशासनं न शिक्षितो निजमेव मनोगतं हितं मन्यमानो यथार्थतः स्वहितं न लभते। स यथेच्छमाचरन् अनर्थमुपैति। यो बालो नानुशासनं प्रापितो नासौ पित्रोराज्ञामनुवर्त्तते न वा यन्मा-नाद्रियते, केवलमभिमन्यते स्वं च भाविजीवनं विफलं कुरुते।

यस्मिन् गृहेऽनुशासनं नास्ति, कदाचिदपि तत्र शान्तिर्न पदं दधाति। तस्मिन् हि गृहे सर्वेऽपि जनाः प्रधानस्याज्ञामनादृत्य यथा—स्वेच्छं व्यवहरन्ति, तेन शान्तिः पलायते। शान्तावपसृतायां विवादाः, अविश्वासाः, अथाव्यवस्थाश्च पदमादधते।

विद्यालयेऽपि महते फलाय कल्पतेऽनुशासनम्। विद्यार्थिनः सुव्यवस्थितस्यानुशासनस्य पात्रतां नेयाः, येन ते स्वगुरूनाद्रियेरन्, तेषामुपदेशाँश्चाशेषमनुसरेयुः। यावत्तेष्वनुशासनसँय्यमो नागच्छति तावत्ते शिक्षिता न मन्यन्ताम्। ते सर्वं शास्त्रमभ्यस्य सकलासु परीक्षासु साफल्यमासाद्यापि मनुष्यपदं तावन्न लब्धुमीशते यावद् दृढेनानुशासनेन सन्दानिता न जायेरन्। काचिदपि सार्वजनिकसंस्था विनाऽनुशासनं न प्ररोहति, तत्सदस्याः कुतोऽपि तावन्न बिभ्यति यावदनुशासनभङ्गसम्भवाद् दण्डात्। ये भारतीयकाङ्ग्रेसस्येतिहासं जानन्ति, वक्तुं शक्नुवन्ति ते, यद्यावत्कालपर्यन्तमस्या संस्थायामनुशासनं नासीत् कीदृशा अनिष्टव्यवहारा अत्र क्रियन्ते स्म। अनुशासनयन्त्रितस्यास्य प्रतिष्ठानस्य बलं कया मात्रयाऽवर्द्धत, तन्न तिरोहितं चक्षुष्मताम्।

शासनसंस्थायाः कृते तु शस्त्रास्त्रेभ्योऽपि समधिकप्रयोजनीयमनुशासनम्। यदि शासनेऽनुशासनं न स्यात् सर्वमपि राष्ट्रं क्षणादेव विशृङ्खलतां यायात्। अनुशासनभङ्गसम्भवापराधभयादेव निम्ना अधिकारिणः स्वतः श्रेष्ठानामधिकारिणामाज्ञामविचिकित्सं पालयन्ति। यदीदं न स्यात्सर्वोऽपि स्वमेव सम्राजमुत्प्रेक्षमाणो निखिलान् नियमानेव शिथिलान् कुर्यादात्मनश्चेच्छया वर्तेत, येन राष्ट्रमेव विपद्येत। कीदृशोऽपि क्रमः शासनस्य कथं न भवतु, प्रतिनिधिशासनम्, एकराजवादः, स्वबलकृतं प्रातिनिध्यमाधारीकृत्य चलितं शासनम्, वैदेशिकं, स्वदेशसम्भवं वा शासनमस्तु, नानुशासनमन्तरा सिद्ध्यति साफल्यमिति हि भूतार्थव्याहृतिः।

युद्धेऽपि दृश्यते—अनुशासनशून्याऽल्पानुशासना वा बहुसङ्ख्याकाऽपि

सेनाऽल्पसङ्ख्याकयाऽपि सम्यगनुशासनशालिन्या सेनया पराजीयते । सेनायान्तु सैनिकास्सद्यो विपदं पुरः पश्यन्तोऽपि सेनापतेराज्ञयाऽग्रत एव प्रतिष्ठन्ते, न स्वं विचारं पुनरावर्त्तयन्ति चेतस्यपि । इदमुत्तमस्यानुशासनस्य निदर्शनम् ।

३—एवं सञ्जातानुशासनाः सर्वत्रापि वर्त्मसु साफल्यं लभन्ते, जीवनं च फलवद् विदधते ।

४—अतश्च ज्ञायते यज्जीवने सफलतामानेतुमनुशासनमत्यपेक्षितं वस्तु । तेन सर्वैरपि स्वहितमर्थयमानैरनुशासनेनात्मा नियमनीयः । अनुशासनं सौवर्णी शृङ्खला, सा मलमपि जनयति स्वाधिष्ठिते भागे, परमियं तमपि दोषं न स्पृशति । परमात्मा सर्वानपि भारतीयान् साध्वनुशासननियन्त्रितान् विदधातु ।

## ६. 'न संशयमनारुह्य नरो भद्राणि पश्यति

१ अभिप्रायः, २ सन्दिग्धे पदन्यासस्यावश्यकता, ३ सन्देहे सत्यप्रवृत्तेर्हानयः, ४ उपसंहारः ।

१—प्रबन्धविषयतामायातेयं भगवती सूक्तिः सूचयति यत् कोऽपि पुरुषः किमपि तावन्न लभते यावदात्मानं सन्दिग्धे पदमाधातुं न प्रेरयति न वा जीवने कमप्युदयमासादयति । यदि जीवनयात्रामात्रप्रयोजनानि कर्माण्येव कुर्वन् स्थास्यति, साफल्यमपि तं दूरतः परिहरिष्यति । मानसिकशान्तिभङ्गं भाविनमुत्प्रेक्ष्य नवे संशयितसाफल्ये च वर्त्मनि पदमनिदधतां जनानां जीवनं महत्या समुन्नत्या कथं युज्यताम् । किमपि प्राधान्यप्रदं पदं, धनं, गौरवं वा लिप्सुभिरवश्यं किञ्चित् साहसिवयमनुष्ठेयम् । उत्साहसहायस्य सर्वा अपि बाधाः पङ्क्त्यां दलयत एव साफल्यलक्ष्मीरङ्कमाश्रयति, सन्दिग्धे पद एव पदं निदधानो भाग्यानुकूले सति समृद्धयति । यः संशयितसाफल्यं कर्म प्रारभते स त्वरया विलम्बेन वा साकल्येनांशतोऽपि वा फलमधिश्रयत्येव । दृश्यतां व्यापारे—सम्प्रति

विक्रये शतं रूप्यकाणि लाभे सम्भवन्ति, परं 'दशदिनानि स्थित्वा विक्रये द्विशतो रूप्यकाणां लाभे समायाति' अस्यां स्थितौ बुद्धिमान् जनो विलम्बत एव, न त्वरते, परं विलम्बेन हानिरपि सम्भवति तदिदं सन्दिग्धं तत्राप्रवर्त्तमानो व्यापारादेव विरमेत् कुतस्तस्माभ्युदयवार्त्ता ?

२—जगति यावन्त आविष्काराः, वैज्ञानिकाश्चमत्काराः, अन्ये च प्रत्यक्षपरिचया आश्चर्यकरा व्यापाराः, ते सन्दिग्धे पदमादधानैरेव कृता दृश्यन्ते। यः प्रथमं 'वैलून' नामकं वस्तु प्रादुरभावयत्स यदि तत्प्रथमप्रदर्शनावसरे वियतोऽपतिष्यत् किं तस्य जीवितस्याभविष्यत् ? किन्तेनेदं भयमननुमायैव प्रवृत्तम् ? हिमालयशिखरपरिशोधप्रवृत्ताना वीराणां सङ्घो जीवनं करतले कृत्वैव तु पुरस्सरति स्म। यदसम्भवं मत्वा साधारणैः पुरुषैः परित्यज्यते, तदेव कार्यं प्राणांस्तृणीकृत्य प्रयत्नमारभमाणेन केनचिद् धीरधौरेयेण साधयित्वा प्रदर्श्यते।

कुतोऽप्यपराधान्निगृहीतस्य कस्यापि सेनापतेः सर्वास्वपि पुनर्विचारप्रार्थनासु बन्ध्यतामुपगतासु तदीया दुहिता तदपराधस्य क्षमा कारयितुं राज्ञः समीपं गच्छामीति स्वपितरं प्रार्थयामास। महत्सु पुरुषेषु विफलेषु तस्मिन्नेव कार्ये स्वस्याः साफल्यमाशंसमानां स्वदुहितरं स सेनापतिर्मुग्धा भावुकप्रवृत्तिकां चाभ्यधत्त। परं भाविनं राज्ञः कोपमपि न बहु मन्यमाना सा राजधानीं प्रति प्रतस्थे, तत्र चानेकैरुपायैः स्वपितुस्तमपराधं क्षमाविषयं विधायैव परावृते। इयं रूसदेशस्य कथा। अत्रापि पश्यन्तु सचक्षुषः, यदि सा साहसावतारभूता ललना राज्ञो भयमुत्प्रेक्षमाणा राजधानीं नायास्यत्कथं साफल्यमध्यगमिष्यत्।

३—यः सन्देहे सति प्रवृत्तिं नावलम्बते प्राणानां धनानां वा मोहेन सांशयिकं प्रयोजनं प्रति नाग्रेसरो भवति तेन किमपि श्रेयस्साधनं, युगपरिवर्त्तनक्षमं, सदादर्शभूतं वा कार्यं कर्त्तुं न प्रभूयते। जीवनं तदेव सार्थकं यत्र दोलाऽधिरोहणमिवानुभवति जनः। एकतः सिद्धिः परतश्च विनिपातः, यदि जीयते सुखं सुखम्, अथ विपद्यतेऽतलस्पर्शी

विनिपातः । एतादृश एव जीवने महदभ्युदयपदं कार्यं कृतं भवति । निस्तरङ्गा जलाशया न समीपस्थमपि तटमाप्लावयितुं प्रभूभवन्ति । इदमत्रावधेयम्–संदेहे पदन्यासेन सिद्धिर्भवति, एतेन सर्पाणां शिरांसि पद्भ्यामाक्रमणीयानि, सिंहानां दन्ता गणनीयाः, समुद्रा वा बाहुभ्यां तरणीया इदं न मन्तव्यम्, विचारं कृत्वा—लाभं हानिं कृतिसाध्यतां नान्तरीयक्लेशातिरिक्तक्लेशराहित्यं, बलवदनिष्ठाननुबन्धितां च समीक्ष्यैव कस्मिंश्चिदपि कर्मणि पदं निधेयम्। अविचार्य प्रवर्त्तमानः साहसी न कथ्यते, न वा सिद्धिं समवाप्नोति, किन्तु स दुस्साहसी विपत्तिमेवासादयति ।

४—अतः साहसेन सिद्धिरासादनीया, संदिग्धे साध्ये हिते कर्मणि सदा प्रवृत्तिराश्रयणीया । इदं न विस्मरणीयं यद्–'वीरभोग्या वसुन्धरा' इति । वीरश्च न कायिकपराक्रमेण भवति, किन्तु मानसिकेन साहसेनैव वीरो भवति, अस्यां स्थितौ स्वहितं कामयमानैर्वीरता समाश्रयणीया ।

—:❀:—

## १०. वीरता

१ वीरतापरिभाषा, २ अत्र विशेषाः, ३ अस्या आवश्यकता तथोपयोगाः, ४ उदाहरणानि, ५ उपसंहारः ।

१—वीरतोत्साहस्यैवातिभूमिं गतस्य नामान्तरम् , अथवोत्साह एव प्रकर्षं साधीयस्त्वं च गतो वीरतेत्युच्यते, वीरतायां स्वार्थस्य मात्रयाऽपि स्पर्शो न भवति, वीरो भाविनः प्रशंसनस्य प्राप्त्यै पारितोषिकस्य वा समीहया न वीरतायै सन्नह्यति, स यत्करोति तत्पीडितायाः प्राणिजातेरुपकारायैव । तदीयामापदमपाकर्त्तुं केवलं तस्य प्रवृत्तिर्भवति । लोकास्सामान्यतो यत्कार्यमसम्भवं पौरुषातिशायि वा मन्यन्ते, वीरास्तदेव कार्यं विधातुमात्मानं संशये निमज्जयन्ति । वीरता कदाचिदसत्यं न्यायस्यापमानं च न सहते ।

२—वास्तविका वीरा न्यायस्य पदध्वनिं परिचिन्वन्ति, सत्यन्याय-

पक्षपातितया ते कदाचिदपि नीचमनुचितं च व्यवहारं नाद्रियन्ते न च स्वयमाचरन्ति। काऽपि विभीषिका काचिदपि पीडा वा न तान् पथ श्च्यावयितुमीष्टे। ते तमेव मार्गमनुसरन्ति यं सत्यं, सुविचारं शुद्धं च विश्वसन्ति। इदमेकं कारणं वीरपूजाप्रचारस्य यत् ते स्वीयपरकीय-विभागं मनस्यपि नानयन्ति। हेतुनाऽनेनैव ग्रीकदेशीया वीरं परमात्मनः स्वरूपं मन्यते।

३—वीरता केवलं युद्धक्षेत्रेऽस्त्रप्रयोगकुशलतया स्वप्रतिपक्षाद् क्षिप्तामेव धर्मो नेदं विचारसहम्। इयं सर्वविधमपि क्षेत्रं स्वीकृतवद्भिः प्रदर्शयितुं कल्प्यते। वास्तविकेऽर्थे मनुष्यपदव्यवहार्यतां कामयमाना नीचं कुत्सितं च जीवनं यापयितुमनीहमाना आदरपात्रतां प्रार्थयमानाश्च पुरुषाः कुत्रापि क्षेत्रे वीरतामामन्त्रयितुं क्षमन्ते, अत एव दानवीर-दयावीर-युद्धवीर-प्रभृतयो भेदा अस्याः प्रचलिताः, नैतावदेव; किन्तु विद्यावीरनामकोऽप्यस्य भेदः प्रचलितः। एतैश्च प्रभेदप्रचारैरस्य भावस्य सर्वतोमुखता प्रदर्शिता भवति। अस्माकं जीवनं न केवलं भुक्त्वाऽन्न-पाचनमात्रमुद्दिश्य कृतम्, किन्तु वयं मनुष्याः किमपि विशिष्टं कर्म कर्त्तुमेव समासादितजन्मानः, तच्च विशिष्टं कर्म वीरतयैव जायते वीरतां विनाऽन्याया न प्रतिरुध्यन्ते, असत्यं न सत्यभावं प्राप्यते, अनुचित नौचितीं नीयते, न वा कर्मैव किमपि साध्वनुष्ठीयते।

३—महात्मा शुकरातो यत्सत्यमवगतवान् तस्य प्रचारे कारावासं नानाविधमुत्पीडनं, परतः प्राणत्यागमपि मृष्टवान्, परं तस्य सत्यस्य मिथ्यात्वं न प्रचारयत्, अयं वास्तविको वीर आसीत्। किञ्च प्रह्लादं यं धर्ममात्मनो हितममन्यत, तस्य कृते पयसि प्रक्षेपं, धराधरशिख राදधःपातनं, कुपितफणिफणामण्डलोपवेशनं, हुताशनप्रवेशं चास हत। एतादृश एव वीरो वीरः कथ्यते। इयं पुराणी कथाद्वयी। आधु निकेष्वपि नरेषु महात्मगान्धिप्रभृतयो वीराः पुरुषा आसन्, ते देश स्वतन्त्रयितुं कृतनिश्चयाः। न कस्यापि पारितोषिकस्याशया ते तथ निश्चितवन्तः; किन्तु भवन्तमन्यायं निरोद्धुमेव तेषामयं क्रमः। ते स्वा

भमतसिद्धये, सत्यामावश्यकतायां प्राणानपि समुत्स्रष्टुमीशाः, कष्टं त्ते सहन्ते न तत्र प्रकाशस्यावश्यकता। यथाकालं तपसस्तेषामस्य लं प्रत्यर्पणीयमेव दैवेन। तेषामयमसहयोगो जगतः सर्वाधिकबल-गालिन्याः शक्तेः प्रतिरोधे व्यापृतोऽस्ति, चिरायास्य शक्तिः तदीयां र्क्ति नमयिष्यतीति हि तेषां दृढो विश्वासः। वीराणां हि स्वभावोऽ-कृतक एतादृशो भवति यत्ते नैतत् पश्यन्ति कत्यस्मान् अनुयान्तीति, । हि स्वसिद्धान्तेषु तथा विश्वसन्ति येन तेषां हृदि विश्वासो भवति, त्तदीयं मतं सम्प्रति परतो वा जनताऽनुसरणीयमेव। अत एव च ते केमपि कष्टमपि न गणयन्ति, उद्देश्यांशे कृतनिश्चयतया तद्व्याघातां-गेषु सर्वथानादरात्। तदुक्तम्—

'को वीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।' इति।

५—ईदृशीयं वीरता यथा सर्वानस्मानाश्रयेत् तथा प्रयतनीय-मस्माभिरेवं सति धरातलमिदं स्वर्गत्वमुपैष्यति। न चेदमतिदुर्गमं त्मं केवलं सत्यस्यानुसरणं, विरमणमन्यायात्, स्वार्थराशेश्च विस-र्जनम्, ईश्वरे विश्वसितं च वीरतया योजयिष्यत्यस्मान्। भगवान् सर्वानपि भारतीयान्नो वीरतया संयुनक्तु यया वयं मनुष्या जायेमहि।



## ११. 'चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च।'

अथवा

## 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण'

१. प्रस्तावना, २. कतिचिदुदाहरणानि, ३. उपसंहारः।

१—कस्यापि दशा सदा समाना न तिष्ठति, यस्योत्कर्षोऽधुनोन्नति-शिखरमारूढस्स एव श्वः अपकर्षगर्त्ते पतन् दृश्यते, अथ सम्प्रत्यधो-गतेरन्धकूपे यः पतितोऽवलोक्यते स एव परश्वः पुरः प्रतिष्ठमानः प्रेक्षिष्यते। योऽधुना समुदयसमुद्रे तरति स एव श्वः पतनमरुभु-क्रियमाणदशामनुभवन् दृश्यते। योऽद्य हताशः श्वसिति स एव श्वः

सदाशाभिः प्रसीदति। अतः परिवर्त्तनशीलमिदं विश्वम्। एतेन य
दशा सम्प्रति नीचा तेन नियमकृते परिवर्त्तने कदाचिदुपरि गन्तव्यम्
तमेवार्थमुपादाय सूक्तिरियमुपनिबद्धा।

२—इतिहासा अस्य तथ्यस्य साक्षिणः सन्ति, ते प्रतिपादय
केन प्रकारेण समयः कञ्चन देशं काञ्चिज्जातिं कमपि पुमांसं वा न
यतीति। प्राचीने काले—यूनानदेशः, रोमदेशश्चोन्नतिशिखरमारू
वास्ताम्। सम्पूर्णं जगदनयोर्गौरवं नतेन मूर्ध्ना स्वीचक्रे। अनयो
शासनपद्धतिः, नीतिः, ज्ञानं, विज्ञानं च संसारे समाद्रियन्त। यूना
'सुकरात' 'प्लैटो' 'अरस्तू' प्रभृतीन् महापुरुषानुत्पाद्यात्मानं कृतार्थय
मास। परं सम्प्रति—तयोरेव देशयोः काऽपि प्रतिष्ठा नास्ति, तेषां भ
ग्यसूर्यश्चिरं धरित्रीं प्रकाश्यास्तमितो वर्तते।

ये च जापान-जर्मन-रूस-ब्रिटेन-प्रभृतयो देशाः पुरा न वह्व
न्यन्त, ये केवलमुदरपूरणमात्रार्थं व्यवसायं मत्स्यव्यापारं च कृ
जीवनं यापयन्ति स्म, तेषामेव सर्वत्र समादरः समवमोक्यते; प्रति
च विधीयते।

किञ्च प्राचि समये हिन्दुजातेः कीर्त्तिपताका सर्वत्र धूयते स
या हिन्दुजातिः सर्वाधिकसभ्यतायाः पात्रमासीत्, यस्या ज्ञानं सर्व
प्रबलं प्रसृतं च स्वीक्रियते स्म, यस्याः समृद्धिः सीमानमत्यश
यस्या जातेः सन्त्योऽतिप्रतिभाभाजो महात्मनः संसारं स्वतेज
ऽवभ्राजन्, सा जातिरधुना कां दशामवम्बते। आन्तरिक—प्रभावरहि
जातिः सर्वतः कान्दिशीकतां भजते। इयं जातिः कदाचिज्जग
मुकुटमणिरासीत्, सैवेयं सम्प्रति विदेशिनां मुखानि पश्यति।
यादृशमस्या उत्थानमभवत्तादृशमेवाधुना पतनम्। इयं सम्प्रति
शिकानां सभ्यतामवलम्बतुं प्रयतमाना तत्तालैरेव नृत्यति। वयमे
दङ्गभूताः प्राचीनानि वस्तूनि घृणया पश्यामः, मातृभाषामवमन्यम
आङ्ग्लभाषामाद्रियामहे, परस्परमपि मातृभाषया व्यवहारे लज्जाम
आङ्ग्लभाषां शिक्षाया माध्यमतया ग्रहीतुमुत्सहामहे, विदेशीयां री
मात्मनो भवनेषु पुरस्कुर्महे, सर्वतो भारतीयां संस्कृतिञ्चावमन्

हे। एतावतैवास्माकं हीनतमाया दशाया परिचयो लब्धुं शक्यते।

सम्प्रति अङ्ग्रेजजातेरुत्कर्षस्य समयो विद्यते। कतिपयभूखण्डा-स्या आधीन्ये सन्ति। अस्या विद्याबुद्धिबलानि सुखसम्पदश्चानु-नमेधन्ते। यदेकमाध्यात्मिकतानिष्ठानामकं वस्तु नास्ति तदेते पश्चात्त्या लसानां व्यवसायं ब्रुवाणा नैव सम्मन्यन्ते। अस्मिन् भौतिकतावादस्य मृद्धेर्युगे को नाम पाश्चात्त्यसभ्यतयाऽनुप्राणितो जन आध्यात्मिक-वनां प्रशंसेदपि का कथा पुनस्तदनुकूलव्यवहारपारायणतायाः? पर-स्या एवाङ्ग्रेजजातेः कदाचिन्नामापि न जानन्ति स्म जनाः। अधुनेव राऽपि सभ्यतया समृद्धभावेन बुद्धिगौरवेण नानादेशप्रभुत्वेन वा नाद्रिय-यं जातिः। केवलं व्यापारं जीविकोपायमवलम्ब्य नाल्पेषु देशेषु भ्रमन्ती यञ्चिदहानि यापयन्तीयं कुत्रापि पृथ्वीकोणे श्वसिति स्म।

अयमेव वृद्धिह्रासक्रमो व्यक्तिविशेषाणामपि जीवने दृश्यते–राज्ञो रिश्चन्द्रस्य कथां को भारतीयत्वाभिमानी न श्रुतवान् स्यात्। आपू-परसागरं हिमवतश्चासेतुबन्धं धराचक्रं शासदपि समयपरिवर्त्तन-हिम्ना श्वपचस्य सेवयाऽऽत्मानं कदर्थयन् श्मशानवासक्लेशमपि ढुं वाध्यते स्म, नैतावदेव—परं प्राणेभ्योऽपि प्रियतमौ पत्नीतनयौ क्रेतुमप्यवसरमलभत। इतः परं या घटना तज्जीवने जाताऽलमिह मुल्लिख्य। आस्तां वेयं पुराणी कथा, साम्प्रतिकेऽपि युगे भाग्यचक्र-रिवर्तनस्य अनेके दृष्टान्ताः प्रत्यहमीक्ष्यन्ते। न चिरव्यतीताऽष्टम-एड्वर्ड" महोदयस्य कथा–योऽद्यैव प्रातः साम्राज्यं भुञ्जानो मध्याह्ने जाभावमभजत। तदनुजन्मा च प्रभाते प्रजाभावेन त्यक्तशय्यः सायं ाम्राज्याधिष्ठातृभावेन शिश्ये।

३—इंग्लैण्डस्य भूतपूर्वः प्रधानमन्त्री रैमजे मेकडोनल्डमहोदयो ीवनस्य प्रभाते सामान्यभृत्य आसीत्, स शयनीयं स्थानमपि नाध्य-ामत्। एभिश्च दृष्टान्तैः साधु समर्थितमिदं यत्—

'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा' इति।

न केवलं मानवसृष्टेरेवेयं दशा, पशुपक्ष्यादिलतावृक्षादिसृष्टौ समयकृतं परिवर्तनं दृश्यते, पशवोऽपि कालविशेषेण शोकहर्षयोरवसरं लभन्ते। वृक्षा ये वसन्ते हरितहरितैः पत्रैः प्रकामरमणीया दृश्यन्ते त एव शिशिरे शातितपत्रतया त्रपमाणा इव जायन्ते। सूर्याचन्द्रमसावपि समयमहिम्नोदयमस्तमयं च लभेते। 'कालक्रमेण जगतः परिवर्तमग्ना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः' धन्योऽसि भगवन् काल! शतं तुभ्यन्नमः।

## १२. अतिपरिचयादवज्ञा

१ अवतारणा, २ व्यवधानेन भयमादरः स्नेहश्च वर्द्धते, ३ स्वभावतः सुलभं वस्तु बहूपयुज्यते निन्द्यते च, ४ उपसंहारः।

१—इयं सूक्तिः स्वव्याख्याकाले कथामेकामपेक्षते, सा चेत्थम्—एकस्मिन् वने शृगाल एकः प्रतिवसति स्म, कदाचिदपि कोऽपि सिंहस्तस्य दृशोर्गोचरतां नायासीत्, स भाग्यवशाद् वने विचरन् क्रूराकृतिं सिंहमेकमपश्यत्। तं पश्यत एव तस्य प्राणाः कण्ठदेशमायाताः पुनः पुनर्बहिर्गन्तुं प्रयासं प्रारभन्त, भीतश्चासौ कथञ्चित् सहायैरन्यत्रानीयत, गते बहुतिथे काले पुनरसौ तमेव सिंहमपश्यत्, अस्मिंश्च द्वितीयदर्शने तस्य साहसं कियतांशेनावर्धत, स तं दृष्ट्वा मनस्यभैषीत्, परं पलायितुं नाचेष्टत। व्यतिगतः सोऽपि समयः। ततः स सिंहः क्वचिदन्यत्रायासीत्। अथ पुनरेकदा तस्यैव शृगालस्य तेनैव सिंहेन सहाजायत साक्षात्कारः, अस्मिंश्च तृतीयदर्शने शृगालो नाकम्पत न वा कण्ठगतप्राणतामयासीत्, परं प्ररूढेन साहसेन त्वं कथमसीति प्रष्टुमुदयच्छत्। भूयो भूयो दृष्टसिंहस्य तस्य शृगालस्य हृदयाद्भयमपगतं, नैतत्तच्छृगालविषय एव, सर्वेष्वपि स्थलेष्वेतत्साधारण्येन स्थितिर्भवति, तेन सततमालोक्यमानस्य वस्तुनो मूल्यमपचीयत इति निर्णीयते, तदाधारैव चेयं सूक्तिः।

२—व्यवधानेन दूरीभावेन, भयमादरः, प्रशंसा च मनस्युदयते। सततसहवासश्चानादरं जनयन् सर्वमपि प्राञ्चं भावं विपर्यासयति। वयं यदा कस्यापि दूरस्थस्य पुंसो गुणानाकर्णयामस्तदा तस्य विषये महतीमुत्कण्ठां मनस्याकलयामः—कीदृशोऽसौ महाशय इति। जाते तु भूयोदर्शने तेन सहवासे च तस्य दोषा अपि दृष्टिवर्त्मन्यवतरन्तो महाशयं तं ततः पदादधो नयन्ति। एका मुद्रिका दूरतो दृश्यमाना मनो मोहयति, तां करे परिधातुमात्मोत्कण्ठते, परिहितायां च तस्यां तदुपादाने हिरण्ये तन्निर्माणप्रकारे च समुन्मिषन्तो दोषास्तां पूर्वतनात् पदाद् भ्रंशयन्ति। का वा वराकी मुद्रिका? प्रयागं कदाप्यगतवतश्चेतस्त्रिकालत्रिवेणीस्नानमिच्छति, तत्र गतस्य द्वित्राण्येवाहानि तथा कुर्वतश्च तस्य ततश्चेतो विरज्यति, प्रातःस्नानमात्रमवशिष्यते. कियता च कालेन दृष्टदूरत्वादितद्दोषः कूपस्नायितामप्यवलम्बते। तथा चोक्तमपि—'लोकः प्रयागवासी कूपे स्नानं समाचरति' इति।

३—मनुष्याणामेतादृशः स्वभावो भवति, यत्ते दुर्लभं विषयमादरेण सुलभं च पदार्थजातमनादरेण निरीक्षन्ते, सुलभतादुर्लभते एव वस्तुमात्रस्य मूल्यं ह्रासं वृद्धिं च लम्भयत इति कथा न प्रेक्षवतां [illegible]ते दुरूहा।

इतिहासविदो जानन्ति, प्रथमजेम्सम्महोदयो निजेन सकलधारणजनतया सहाचरितेन सरलेन व्यवहारेणैव समग्रस्य 'इङ्ग्लैण्ड' देशस्योपहासस्य भाजनं जातः। तेषामिङ्ग्लैण्डवासिनां निन्दायास्स यथा पात्रमभवत्, यथा लोकास्तेन सह वार्त्ताऽऽलापेऽपि त्रपन्ते स्म। अन्यदपि दृश्यताम्-मधु मधुरं स्वादिष्ठं, पथ्यञ्च, परं तदेवाधिकया मात्रयोपयुक्तं वमनं प्रयोजयति, समधिकारुचिकृतं विरागं जनयति, पित्तसम्भवान् आमयांश्च भावयति।

४—ये साम्प्रतिकलोकाचारं परिच्छिन्दन्ति ते तु सुखमवसातुमीशते यत् सततसहस्थितिरतिपरिचयश्चावज्ञां प्रवर्त्तयत्येव। अत एव

चेहयुगे गौरवास्पदे शासनसम्बन्धिनि पदे नियुज्यमाना स्वं लोकेभ्यो गोपायित्वा रक्षितुमपि भवन्तो यतेरन्नित्यादेशमपि स्वाधिकारिभ्यो-ऽधिगच्छन्ति, तं पालयन्ति, तत् प्रशस्यन्ते, पदोन्नतिं चाप्नुवन्ति, तद-न्यथाचरणे विनिपतन्ति। किञ्चातिसुलभे जने किमित्यादरो वर्द्धताम्? आदरो हि तस्य बहुमूल्यतया प्रसूयते, सा च तत्र नास्ति। अतिपरि-चयश्च सुलभतां विश्वसयति। अत एव च स्वकर्मभूमौ साधारणतया गण्यमानोऽपि जनस्तस्यामेव योग्यतायां स्थितौ च देशान्तरं गतो निजगौरवं प्रदर्श्य तत्रत्यजनताकृतादरभरेण युज्यते। ईदृशि स्थितौ सत्यमिदमुक्तम्—

"अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति।
मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते॥"

## १३. सत्यवादिता

१ परिभाषा, २ सत्यं समाजस्याधारः, ३ दृष्टान्तः, ४ असत्ये भयम्, ५ उपसंहारः।

१—सते कल्याणाय हितं सत्यम्, सत्यं हि नाम-यद्यथा ज्ञायते तथा-तदभिधानमुच्यते, वयमीश्वरेण जिह्वाप्रदानेनानुगृहीताः जिह्वया च सत्येऽभिधीयमाने परमेशितुः प्रसादः प्राप्यते असत्ये तूक्ते तत्को-पभाजनत्वं सम्भाव्यते, यथा-पित्रा दत्तेन खड्गेन दुर्बलान् रक्षन् पितुः प्रीतेः पात्रं जायते, तेनैव चावध्यान् जिघांसन् तद्भृशंघृणाया आस्प-दत्वं प्रपद्यते, तद्वत्। ईश्वरो यथाऽसत्यादुद्विजते न तथाऽन्येभ्यो दोषेभ्यः। वाग् हि परमात्मनो दानेषु श्रेष्ठतमा, सा यथा न दोषेण व्यव-कीर्यते तथा प्रयसनीयमस्माभिः।

२—अथान्यथा दृक्पातेनेदमवगम्यते यदस्य समाजस्य मूलभूता भित्तिरपि सत्यमेव। समस्तमपि जगदत्रैव नियन्त्रितव्यवहारम्। सत्यं विना जनाः परस्परं व्यवहर्तुं न शक्नुवन्ति, सर्वेऽपि व्यापारा विश्वास-माश्रयन्ति मूलम्, सा च सत्यादृते न शक्यसमुत्पत्तिः। संशयितसक-

ख्वाचो हि समाजस्य किमपि कार्यमसम्भवप्रभवम्। कस्यापि वस्तुनः क्रयविक्रयौ सर्वत्रासत्ये सत्यैकपद एव विपद्येयाताम्। अतोऽस्माभिः समाजस्य, यं विना वयमेकान्ततोऽसभ्या गण्येमहि, न चिरं प्राणितुमप्युत्सहेमहि, प्रतिपदं च विपद्येमहि, रक्षायै सत्यस्योपयोगो माननीयः।

३—अस्माकं पूर्वजाः सत्यं बह्वाद्रियन्त, ते सत्यं पालयितुं प्रियादपि प्रियतरं पदार्थं प्रयासमवलम्ब्य पर्यत्यजन्, परं सत्यान्नाच्यवन्त। श्रूयते हि युधिष्ठिरः सत्यवादी, स प्रायो विपद्यपि सत्यं नाहासीत्। हरिश्चन्द्रस्य सत्यव्यवहारस्तु सर्वविदित एव; यो निखिलं सुखं, राज्यं, प्राणेभ्योऽपि प्रियां वनितां, लोचनेभ्योऽपि प्रचुरप्रमोदप्रदं पुत्रं परित्यज्य चाण्डालसेवामङ्गीकृत्यापि सत्यं नाहासीत्। असत्यमन्याभिसन्धानेनोच्यमानमपि पातयति प्रयोक्तारम्, यथा द्रोणवधप्रयोजकाश्वत्थाममृत्युवृत्तान्तो गजपरकतयोच्यमानोपि युधिष्ठिरेण नरकमदर्शयत्। एकमपि प्राचीनं सत्यवादिनां निदर्शनं प्रमापयत्यस्य सत्यस्य माहात्म्यम्, दृश्यतां—महाराजो दशरथः स्वप्रियायाः कैकेय्या रामवनगमनरूपां प्रार्थनां सत्यस्य सूत्रेण बद्धतयैव न तिरस्कर्तुमपारयत्, वरं प्राणान् प्रियतमपुत्रस्य विरहे पर्यहरत्।

४—सत्यभाषणमहत्तां मीमांसमानेनासत्यभाषणस्यापि मीमांसा कर्त्तव्या। असत्यं भाषणसमये कियते कष्टाय भवति तत्त्व एव जानन्ति, ये तद्भाषिणो भवन्ति, एकस्यासत्यस्य प्रच्छादनाय दश पञ्चदश वाऽसत्यानि वक्तुं बाध्यते जनः। असत्यभाषी सकृन्नापि तथाऽवगम्येत्, परं सर्वदा तद्गोपनं न सुकरं भवति। असत्यभाषिणां समुदायो न परस्परं विश्वसिति, सर्वः परस्परं सन्दिग्धयैव दृशा पश्यति। असत्यभाषणं सर्वत्रैव देशे समाजे च निन्द्यत एव। सर्वप्रथमं सभ्यतया गर्वभाजो हिन्दवो, ग्रीसवासिनः, रोमादेश्याश्च महता श्रमेण सत्यं स्तुतवन्तः। असत्यमविश्वासमुपजनयन्महान्तं क्लेशं निमन्त्रयति।

५—अतो मनुष्याणां जीवने सत्यमावश्यकं, जीवने साफल्यमुप-

लिप्सुभिरवश्यमस्य पालनाय प्रयासोऽवलम्बनीयः। सत्यभाषणार्थं दीर्घदीर्घस्य प्रयत्नस्य नास्ति प्रयोजनम्, इदमस्माकं मुखस्याग्र एव सदा तिष्ठति, ( असत्यमेव भाषणावसरेऽनुसन्धीयत इत्यपरं लाघवं सत्यभाषणे ), एवञ्चासत्यभाषणे सम्भवतो दोषानवलोक्य वयं जीवनस्य व्रतं विदध्याम—

सत्यं चिन्तनीयं, सत्यं वक्तव्यं, सत्यमेव च व्यवहरणीयम्, इ तथा चोक्तम्—'सत्यान्नास्ति परो धर्मः' इति।

## १४. आत्मसंयमः

१ परिभाषा, २ आत्मसंयमस्य महत्ता, ३ एतदभावेन हानिः, ४ उपसंहारः

१—जगति जन्मत एव भिद्यमानानां प्राणिनां मनसि द्विवि भावाः—असन्तो विचाराः सन्तो विचाराश्च तिष्ठन्ति, न जातु कोऽ ज़ातस्तादृशो जातो, योऽस्य द्वैविध्यभाजो भवबन्धनस्य भाजनं भवेत्। तत्र साफल्यं तस्यैव जीवने जायते यो मनसि प्रादुर्भवत ऽसतो विचारानन्तरेव यमयति। अस्यैव चासद्विचारनियन्त्रणस्य ना 'आत्मसंयम' इति। दुर्विचारैः पराजितैरात्मा पराजीयते तदभिम नेनैवात्मसंयमपदस्य तत्रार्थे प्रयोगः। आत्मनोऽयं संयमः, विजय निग्रह इति चाख्यायते। कचिच्च मनोनिग्रहरूपेणाप्यस्यैवार्थस्योप दनं विधीयते।

२—आत्मसंयमं सेवमानो हि जनः कदाचिदपि कर्त्तव्यान्न हीय कर्त्तव्यपालनपरायणता च सर्वासां समृद्धीनां मूलमिति न कोऽपि ज नाङ्गीकुर्वीत। एवञ्चात्मसंयमः सर्वसम्पत्तीनां मूलमित्यर्थत आपन्नम कोऽपि च्छात्रो नानाविधैः सांसारिकैः प्रलोभनैराकृष्टुमिष्यमाणो यद त्मानं नियमयन्ति, गौरवं समेधयन्तीं शिक्षां समापयति, प्रतिष्ठया स समागच्छन्तीं श्रियमासाद्य प्रसीदति, किञ्च संसारे जातमात्रस्य म ष्यता नाग्भापिक्येव, वास्तविकी मनुष्यता नान्तराऽऽत्मसंयमं सम

विनी, दुर्जयाश्च विषया विदुषाऽपि । विषयैश्चैभिः प्रतिपदप्रसृमरै र्बडिशैरिव मत्स्या बलादिवाकृष्यन्ते, तस्मिन् समयेऽमी पर्यन्तविरसा अपि भोग बहु स्वदन्ते, न च प्रत्येति मनागपि मनोऽमोषां परिणामदुरन्तताम्, सम्भवपथातिथयश्च सर्वा अपि सिद्धयः स्वसंयमे बीजरूपेण निहिताः, तदिह परमावश्यकोऽयं पदार्थः ।

३—मनुष्यो हि सर्वथा निर्दोषो न भवतीत्युद्घोषो नातीवासत्यः । ईदृशि स्थितौ य आत्मसंयमं वर्त्तयति तेन बहुषु विषयेषु दोषमार्जनं कृतं भवति, येन तस्य मनसि महानात्मसन्तोष आनन्दश्चोदयते, यं स एवास्वादयति यस्तथाभूतपथपथिकः ।

४—एको दोषो दाषान्तराणि समुच्चिनोति, यदि वयं निजं मनो यथारुचि व्यवहर्तुं त्यजामः, तस्य वैषयिकीं प्रवृत्तिं न निरुन्ध्मस्तर्हि पदे पदे क्षणे क्षणे निजान् दोषपयसि सशिखं मज्जतोऽनुभविष्यामः । आत्मसंयमाय जलाञ्जलिं दत्तवन्तो मनुष्या अपि पशव एव, शृङ्गपुच्छराहित्यमात्रं विशिष्यते । एकदा विषयैर्हृतस्य मनसः पुनरुद्धारो न भवतीति, विषयाय सकृत्प्रदीयमान आत्मा तद्दास्यमाश्रयति । न चासौ कदाचिदपि ततः स्वस्य मोक्षाय चिन्तयत्यपि । यः कस्मिंश्चिदपि विषये साभिलाषः, स यदि न संयमी तदा चौर्यमपि विदध्यात् । यश्च पाने सञ्जातरुचिः स यदि नात्मानं निरुन्धे सम्पद्यते मद्यपः ।

५—अस्यां स्थितौ स्वाभाविक्याः कुप्रवृत्तेः प्रतिरोधः, शब्दान्तरेणाभिधाने—आत्मसंयमोऽवश्यं प्रथमादेव वयसः कर्त्तव्यः । तत्र बालेषु यावत्तावती विचारशक्तिर्नायाता स्यात्तावत्तत्पित्रोः करणीयं शिक्षापदाभिलष्यम् । सति तथा समर्थे ज्ञाने स्वकर्त्तव्य 'आत्मसंयमः' । अत एव च पण्डिता असंयतेन पठितमपठितं श्रुतमश्रुतं प्रतिज्ञातमप्रतिज्ञातं सङ्कल्पितं चासङ्कल्पितमाहुः । यतश्च—

'इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद् विद्वान्यन्तेव वाजिनाम्' ॥ गीता ।

# १५. जातिव्यवस्था

१ अस्या मूलम्, २ जातिभेदाः, तेषां कर्त्तव्यानि च, ३ जातिव्यवस्थायाः पूर्वसमये स्थितिः, ४ तस्या एव साम्प्रतिकी दशा ५ जातिव्यवस्थया लाभालाभौ, ६ उपसंहारः।

१—जननेन प्राप्यते या सा जातिः, सा च ब्राह्मणत्वादिका। भुवि भारतवर्षवदन्यः कोपि देशो जातिभारेणाक्रान्तो नास्ति। सम्प्रति जातिभेदोपभेदास्तावतीमतिभूमिं गता येन तस्या भेदानां गणना गङ्गातटप्रसृत-सिकतागणनापेक्षयाऽपि दुष्करा। इयं च जातिप्रथा न नवा महाभारतकालेऽपि जातीनां सत्ता श्रूयते। ततः पूर्वतनासूपनि त्स्वपि जातिकथोपलभ्यते। इमां प्रथां प्रथमतः क आविश्चकारेति ना ग्राहं न निर्णेतुं शक्यते, परमस्या मूले सामाजिकव्यवस्थाया दृढीक णस्य भावनया कर्मभेदनिर्धारणमेव कारणमवधारयामः। स्मरणीयों हासयुगतः पूर्वतनीं सभ्यतां पालयतोऽस्य देशस्य कतमयाऽऽवश कतया प्रासूयतेयं जातिव्यवस्थेति यदा निर्णीतं भविष्यति तदैतिह सिकाः परां मुदमुपैष्यन्ति। केचिच्च—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति गीतायामीश रोक्तं प्रमाणयन्तोऽस्याः प्रथाया अनादितां समर्थयन्ते। यदस्तुतदस्तु अस्याः प्राचीनतरतायां वयं दृढप्रत्ययाः।

२—'ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः, ऊरू तदस्य यद्वैश्यः, पद्भ्यां शूद्रोऽजायत' इति सहस्रशीर्षाभिधानाध्याय मन्त्रं पश्यतां मतेऽस्याश्चत्वारो भागाः, अमी च भागाः कर्मानुसारेणैव कृताः, येऽध्ययनाध्यापनयाजनादिकर्म चक्रुस्ते ब्राह्मणाः, युद्धदेशरक्षाशासनाद्यधिकृताः क्षत्रियाः, कृषिवाणिज्यपशुपालनाद्यवलम्बमाना वैश्याः, दासताश्रिताश्च शूद्रा अकथ्यन्त। अत्र च स्मरन्ति :—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'। समयानुकूलतया

विधीयमाना चेयं व्यवस्थाऽद्यापि दृढमूलतया नाकम्पत। पश्यत चात्रास्मत्पूर्वजानां बुद्धिवैभवम्।

३—इयं प्रथा पुरा काले संघट्यमानया हिन्दुजातेः सुविधामाधातुमेव व्यधीयत, एकः सङ्घ एकस्य कर्मणः कृते नियुज्यमानो ( जातायामन्येषां सङ्घानां ततः कर्मणो निवृत्तौ ) यथा सफलतया प्रयस्यति न तथातदन्यथाभावे। मन्यतामेकत्र विद्यालये पञ्च कक्षाः सन्ति, पञ्च च प्रकोष्ठानि मार्जनीयानि विद्यन्ते, तत्र यदि प्रत्येकवर्गतः कतिपये छात्रास्तत्र व्यापार्यन्ते साधु न तत्साध्यते तैः, एकः पुनः समग्रवर्गः स्ववर्गस्य प्रतिष्ठामिव वर्द्धयितुं प्राणान् पणीकरोति, साधयति च कार्यम्, एषैव गतिर्जातिव्यवस्थायामपि कर्त्तव्यविभागावधारणार्थायाम्। एवञ्च कर्मणा जातिव्यवस्थां सिध्यन्तीं पश्यन्तो धर्मशास्त्रविरोधं मा शङ्किषत, धर्मशास्त्राण्यपि गुणकर्मविभागशः सिध्यन्तीं जातिव्यवस्थां न विरुन्धन्ति, केवलं यस्य जन्म क्षत्रियवंशे, तस्मिन् भूयसा स्ववंशसम्भवपूर्वजरक्तप्रवाहस्य स्वाभाविकतया तदुचितकर्मणामेव सुखं सानीयत्वस्य सम्भवात्, सत्यपि क्वचिदन्यविधदृष्टान्ते तस्य क्वाचित्कतया व्यवस्थाप्रवर्त्तकत्वानङ्गीकारात्, भूयसा हि व्यपदेशस्य प्रसिद्धेः, तथा च क्षत्रियवंशप्रसूतस्य व्यापारप्रवृत्तत्वेऽपि पूर्वजरक्तमहिम्ना तस्मिन् व्यापारकौशलतत्त्वापेक्षया शासनसामर्थ्यबीजस्यैवाधिक्यस्य सम्भावनया ( पूर्वजाचरितकर्मकृतजातिनिर्णयस्य व्यवहृतत्वाच्च ) तथा व्यवहारस्य युक्तत्वम्। अस्याश्च व्यवस्थायाः पुरा महानादर आसीत्, अस्या रक्षणाय कियतां प्राणानां क्षतिरपि समाजेन सुखमसह्यत। जातिनियमानां पालनाय बहवः क्लेशा अपि निश्शब्दं स्वीक्रियन्ते स्म, का कथा जातेः? उपजातीनां ज्येष्ठभावाभिमानमात्रफलानां जातितदुपभेदाविर्भावितसत्ताविशेषाणां रक्षणायापि बहु चेष्टितमस्माभिः। अशेषदोषदूषितस्यापि जातिश्रेष्ठस्य कृते महानादरः कृतः 'जातिगङ्गा गरीयसी' इत्याभाणकोऽपि जन्मलभ्यजातिपरकतया समर्थितः।

४—परं सम्प्रति जातिव्यवस्थाया अनादरस्य वायुः प्रवहमाण इव भवति, कतिपये ब्राह्मणा अपि कस्यापि शूद्रस्य वैश्यस्य वा जातौ यौनं भोजनादेर्वा सम्बन्धं कर्तुं प्रवृत्ता दृश्यन्ते, जातिनियमानामपालनेऽपि न पुरेव क्लिश्यन्ते, परमिदं परिवर्त्तनं नाकस्मिकम्; न वा कस्यापि निरूढप्रभावस्य प्रचारस्य फलम्, किन्तु सम्प्रति सभ्यतासङ्घर्षमये समये नानाप्रान्तदेशीयजनसमाजस्य जाते दैदन्दिने सम्पर्के स्वाभाविकेनाकर्षणेन जन्यते। इदं च दिनानुदिनमेधमानमेव सम्भाव्यते, न चैतावन्मात्रेण जातिव्यवस्थाभिमानशालिभिरस्माभिर्भेतव्यं, भगवता कृताया अस्या नाशस्यापि तदधीनत्वात्, तेन कृते च नाशे शोच्यताविरहात्।

५—यत्र जातिव्यवस्थया समाजः परिचालितः, सर्वेऽपि समाजसङ्घा उचितकर्त्तव्यनिर्णयेनासङ्कीर्णव्यापाराः कृताः, कर्त्तव्यासाङ्कर्यसम्पादनद्वाराऽऽर्थिकस्थितिवैषम्यं नियन्त्रितं, साधुकर्मप्रवृत्तिर्जनिता जनेषु, तत्रैव लोकानां मिथ्याभिमानस्यापि बीजमुप्तं, यत्समये कटु फलं फलति, जात्यन्तरकर्त्तव्यकरणीयानामापद्यपि कर्त्तव्यतां प्रतिषिध्य जीवनस्य मार्गोऽवसरविशेषे कलुषीकृतः, विरोधभावनायाः प्रकटनेन शान्तेः स्रोतो निरुद्धम्, स्थलविशेषेषु समुन्नतेर्मार्गेऽपि नगायितमिति।

६—तदियं जातिव्यवस्था दरिद्राणामेवादरणीयतां दधाना ह्रासमिवायान्ती यथा न लुप्यते तथा प्रयतनीयम्। पाश्चात्त्यसभ्यताप्रवाहो हि बलादिव पातयितुं प्रयतते ताम्। परमियं वराकी 'हिन्दुस्थान'-मात्रशरणा यथा न विपद्यते, गुणकर्मविभागाधीनजन्मनोऽस्याः स्वरूपं यथाऽऽपतितान् दोषानपास्य चमत्कृतिं प्रपद्यते तथा विदध्यात् परमात्मा। शमिति।

—:o:—

## १६. भूकम्पः

१ अस्य कारणम्, २ स्वरूपम् , ३ क्षतिः, ४ उपसंहारः ।

१—इयं धरा सर्गादावेव यथाऽधुना दृश्यते तथा नोदपद्यत, वैज्ञानिकाः कथयन्ति जलमयीं सृष्टिं प्रथमाम् , मनुरप्यर्थमिममनुमोदयति स्म—'अप एव ससर्जादौ तासु वीर्यमवासृजत्' इति । ताश्चापः क्रमशो घनीभावमापन्ना भूभावं भेजिरे । अस्याश्च घनीभूताया मध्ये भागे कतिपये तैजसा धातूपधातुखनिजपदार्थास्तरला दीप्तिमन्तो दाहकाः शीतशीताश्च सन्ति स्थानभेदेन भिन्नप्रकृतयो भिन्नफलाश्च । तैश्च पदार्थैरस्याः पृथिव्या बहवो लाभाः सम्भवन्ति, पृथिव्यां पातितस्य जलादेस्तरलस्य, निखातस्य वा वस्तुनः शोषणादिना समशीतोष्णतासम्पादनं तैरेक क्रियते, अस्या वसुन्धरापदप्राप्तेः साधनानि च रत्नानि तैरेव पच्यमानानि दीप्तिभाञ्जि जायन्ते, इयं चेदृशी पृथिवी तेषामेव तैजसपदार्थानां संयोगमात्राधिक्यादिना विशेषान्यतमेन जाते ज्वालाधिक्ये तन्महिम्नैव चलति, स एव भूकम्पः इति केचित् ।

कतिचन वैज्ञानिकास्तु पृथिव्या बहुस्तरतां ब्रुवाणा अधोऽवस्थितस्य स्तरस्यैकस्य स्वाभाविकेनान्तरवस्थितज्वालाजालकृतेन वा पातेनायं भूकम्पो जन्यत इत्याहुः ।

भारतीया सनातनधर्मानुसारिणी जनता तु भुवं पृष्ठदेशे विभ्रतः शेषनागस्य पार्श्वपरिवर्त्तनमत्र कारणमाह । स चायं भूकम्पो भूयसा तत्रैव भवति, यत्र भूभागे ज्वालामुखी लीना भवति । एवमपि दृश्यते यत्र भूयो भूयो भूः कम्पते तत्र ज्वालामुख्यपि कदाचित् स्फुटति । यदवधि स्मर्यतेऽस्य भयानकः प्रकोपो 'लीमा' नामके स्थाने १७४७ खीष्टाब्देऽजायत । १७५५ खीष्टाब्दे पोर्त्तुगालानां राजधान्यां लिस्बन् नगरे महाभीमो भूकम्पोऽभवत् । अस्मिश्च भूकम्पे यूरोपदेशोऽप्यस्य कम्पस्यानुभवमकृत । जापानदेशे जातः १९२५ खीष्टाब्दीयो भूकम्पस्तु तस्य देशस्यार्द्धविशेषलोकतां लुप्यमानसर्वव्यवस्थतां च व्यधित ।

भारतेऽपि १८८७ खीष्टाब्दे वेगेनैव भूकम्पो जातः। प्रत्यग्रः सम्प्रत्यपि स्मर्यमाणदुरन्तभावः १९३४ खीष्टाब्दीयो भूकम्पस्तु प्रायो नूतन एव जनानां मनसि। अनेन हि धूलिसात्कृतानां भवनानां दशा बहुषु स्थलेषु प्रागिवाधुनापि नाजायत। क्षणेनैकेन निश्शेषीकृतस्य परिवारस्य, उर्वराया अपि सिकतामयीभावं गताया भुवः, कलकलनादेन वहन्त्या अपि नद्याः शुष्यमाणतया सद्यः समतलवालुकामयक्षेत्रतासम्पत्तेश्च स्मरणेन कम्पमिवाकलयति स्वान्तम्। कलाद्वयात्मक एव कालोऽनेन भीषणभूकम्पेन नीयमानो लोकानां यातायातम्, दैनन्दिनोपयोगयोग्यसामयिकसाधनसमुदयं, सामग्रीसम्पदं च तथा ध्वंसावशेषतामनैषीत्, यथा लोकाः शताब्दीपञ्चकात्मक कालं प्रागनुगमिताः। माता पुत्रं, पतिः प्रियां, श्वश्रूः स्नुषां, सहोदरो भ्राता भगिनी च हित्वा प्राणमात्ररक्षणप्रयासे व्यग्रतया पलायन्तेति समस्तामपि महता क्लेशेन सञ्चितां सम्पदं परित्यज्य प्राणमात्रस्य रक्षायै च लोकान्धावतो वीक्षितवतां हृदि 'आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतिरगमकचरितार्थभावम्।

अनेन भूकम्पेन महती क्षतिः सम्पाद्यते, तृणनिर्मितान् गृहान् विहायान्यानि भवनानि पतन्ति, तदघश्च लोकानां संहारो जायते, जगत्या व्यथामिव सोढुमशक्नुवत्या धराया हृदयं विदीर्यते, कचिद् भुवोऽन्तरालान्निर्गतस्य तरलस्य तैजसस्य च पदार्थस्य प्रभावेणाग्निकाण्डमपि लङ्काकाण्डं पुनरावर्त्तयति। लोकानां दारिद्र्य शताब्द्या एकस्याः कृते पुनरुदयमुपैति। तात्कालिकी दशा तु पुनरनार्यावस्थां स्मारयति।

४—ईदृशश्चायं भूकम्पः सर्वैरपि भयेन, उत्पाततया विचित्रेणेव कल्पनोपनीयमानचेतश्चाञ्चल्यकरेण भावेन स्मर्यते। अस्य प्रभावं कुण्ठयितुं लौहकीलमभ्यन्तरीकृत्येष्टकाभवनानि निर्मान्ति धनिकाः। क्वचित् काष्ठपट्टकैरपि सदनानि निर्मान्ति। दरिद्राणां तु तृणमयमेव कुटीरं परित्रायते तान्। यस्मिन् देशे भूयो भूयोऽयमुद्भवति तत्र

त्वस्योद्वेगः कियतांऽशेन प्राप्त इवाल्पो भवति । भारते तु चिरादयमायाति, तेनात्र महत्यस्य बिभीषिका । भगवान् अतोऽस्मान् रक्षतु ।

—:०:—

## १७. विद्ययाऽमृतमश्नुते वा विद्वान् सर्वत्र पूज्यते अथवा विद्या

१ अवतारणा, २ विद्यया लाभाः, ३ विद्याप्राप्तेरुपायाः, ४ उपसंहारः ।

१—विद्याशब्दो ज्ञानार्थाद्विदेः साध्यते, एवञ्च कतिपयानां वाक्यानां, गणितप्रकाराणां वैज्ञानिकाविष्काराणां या ज्ञानं विद्येति वक्तुं पार्यते । परमीदृशार्थसमर्थनं सङ्कुचितवाच्यतामस्य शब्दस्य प्रकाशयेदतश्च— यया मनुष्यस्य सुप्ताः स्वाभाविक्यः शक्तयो बोध्येरन्, लौकिकपारलौकिकविषयाणां वास्तविक ज्ञानं चोत्पाद्येत सा विद्येति परिभाषामाद्रियन्ते विद्वांसः, वस्तुतत्त्वमीमांसयाऽपि न केवलं कस्यचिद्ग्रन्थस्य कण्ठस्थीकरणं तदर्थावगममात्रं वा विद्यां वक्तुमुत्सहामहे, अनग्नौ हुतस्येव तावतो ज्ञानप्राग्भागस्याकार्यकरत्वात् । ईश्वरो हि सहजया स्वया दयया ( पुरुषकृतेन श्रमेण ) तदन्तःस्थितां तदीयां शक्तिं बोधयति सैव वास्तविकी विद्येति विद्यः, अध्ययनमात्रस्यापि तदुद्भावकतया कार्यकारणयोरभेदमूरीकृत्य तथा संज्ञाकरणम् ।

२—मनुष्याणां हृदयेऽन्धतमसावृते बहुविधा नानाविषयाश्च शक्तयस्तिष्ठन्ति, ता न स्वतः प्रकाशन्ते, विद्यया दूरीकृते तस्मिंस्तमसि तेजोऽवरोधिनि तास्ताः शक्तयः प्रकाशमासाद्य पुमांसं प्रतिष्ठामानयन्ति । तेनैव च प्रकाशेन मनुष्याणां शीलं शुद्ध्यति, स्वभावो विवेकभाग्भवति, चरित्रं चारुतामञ्चति, वार्त्तालापः परिपक्वप्रबोधो भवति । येषां विषयाणां ज्ञानं मूर्खा मनुष्याः शतवत्सरमितकालेनापि नाशासते, तानेव विषयान् विद्वांसः क्षणेन प्रत्यक्षेणेवेक्षन्ते । आश्चर्यकरं धूमयानं ( रेल ), तडित्प्रवाहं ( तार ), धूमजलयानं ( जहाज ) च विद्याबलेनैव लोका आविरकार्षुः । अद्यापि यासु जातिषु विद्या नास्ति ता वनेषु

वसन्ति, पत्राणि तरूणां वसते। विद्याबलेनैव लोका भूमिनिखातं रत्नमासाद्य धनिनो जायन्ते। विद्यैव परदेशस्थितस्य प्राणेभ्योऽपि प्रियतमस्य पत्रं द्वारीकृत्याधिमग्नां सततरुदितोच्छूननेत्रां तत्प्रियामाश्वासयति। विद्यैव चात्रापि निदानं यद्वयं रामं कृष्णं च स्मरामः, इतिहासप्रसिद्धेभ्यः पुरुषधौरेयेभ्यः स्वान् आदरोपनतश्रद्धाञ्जलीनुपहरामः, यो ह्यनया भूषितस्तस्यान्येषु भूषणेषु वृथा प्रयासः, 'विद्या रूपं कुरूपाणामि'ति चाहुः प्राञ्चः। येन विद्याबलमर्जितं स स्वां कीर्त्तिममरीकृत्य जनान्तरवन्न लोकानां ज्ञानाध्वनोऽपयाति, किञ्च स न केवलमात्मानममरत्वमापयति, किन्तु यस्य तथात्वाय यतते तमेव तथाभूतं विद्धाति, वाल्मीकिविद्यैव रामचन्द्रमधुनापि गीयमानचरित्रं करोतीत्यपि किं प्रमाणमर्हति ?

यो हि विद्यामर्जितवान् न स कदाचिदपि जाठरज्वालया दह्यते, सदा तदाश्रिता विद्या तदुदरपूर्त्तये प्रबध्नाति। यथाहुः—

श्रुतेन यत्नेन च वागुपासिता,
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ इति।

यदि च केचित्—साम्प्रतिके युगे सर्वेषामपि लभ्यवस्तूनामर्थसाध्यतां निभालयन्तो द्रव्यं विद्यापेक्षया प्रभूतस्यादरस्य पात्रं समर्थयन्ते तान्प्रति ब्रूयाः—अङ्गा हि भवन्तो धनं चौरेभ्यो गोपयितुं राजकर्तृकाद्धरणाद्रक्षयितुं प्रकृतिप्रकोपहृतादुपद्रवात्त्रातुं भ्रातृभाज्यतायाः शेषयितुं कञ्चनावन्ध्यं प्रतीकारमाविष्कृत्य दर्शयन्तु, तत एवं साहसमाचरणीयम्, विद्या हि चौरैर्नापह्रियते, राज्ञा नादीयते, प्रकृतिप्रकोपकृतोपद्रवैर्न हीयते, भ्रातृभिश्च न विभज्यत इति हि सर्वसम्मतमेव। अपरञ्च दृश्यताम्—यदि भवान् कोटिवित्तः कञ्चनदेशमन्यं याति, यत्र भवन्तं कोऽपि न परिचिनोति विद्वांश्चैको रिक्तकरस्तत्रोपतिष्ठते, तत्र द्वयोः कस्यादरोऽधिकः स्यात् ?

३—सा चेवं विद्या न केवलं पुस्तकानामध्ययनेन साध्या, तावता तु तस्या भूमिकामात्रं निर्मीयते। प्राकृतस्य संसारस्य पर्यवेक्षणं, स्वाधीत

ग्रन्थजन्यज्ञानकृतविवेकस्योपयोगं च विद्यामभिदध्मः। यद्यधीतवतोऽपि मनसि विवेकः पदं नादधाति, वृथा तदा समारम्भः, किञ्च सर्वो व्ययो वृथा। यूनानदेशवासी महात्मा 'शुकरातः' नाधिकमधिजगे, परं तदीयो विवेकस्तं भूयसो लोकादरस्य पात्रमकृत। वर्त्तमानसमयेऽपि लोकतन्त्राधिपः सर्वाधिकजनमानसिकादरभूमिर्महात्मगान्धी महोदयो नाधिकाध्ययनप्राप्तगौरवः। पञ्चनदेषु लब्धजन्मा रणजीतसिंहो नाक्षरमपि पर्यचिनोत्, परं सकृत्समग्रमपि भारतमधिकर्तुं स्वप्नमद्राक्षीत्।

४—अस्याश्च लाभाय सर्वविधोऽपि प्रयत्नो न दुष्यति। स्थानं मानं विमानं वाऽस्या उपलब्धये न विवेचयन्ति सन्तः। स्मर्यतेऽपि—'विद्यामाददीतावरादपि'। ज्ञानमेव वार्द्धक्यकारणं मन्यमाना बाला अपि वृद्धानध्यापयन्तो यथा वृद्धानपि तान् पुत्रपदेन व्यवजह्रुः तदौचित्यं च निरचैषुस्तथा जानन्त्येव साम्प्रतिकाश्छात्राः, एतेन च नराणां बालेभ्योऽपि विद्यालाभसम्भवे तदनादरभीतिनिवर्त्तकप्रसङ्गेन विद्याया महिमा गीयते, किञ्चाहुः-'स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते' इति। अतश्च यथारुचि यथाशक्ति विद्या शिक्षणीया सर्वैः।

## १८. मितव्ययशीलता

१, अवतरणम्, २ अतो लाभाः, ३ कथमियं शिक्ष्यते ? ४ अपव्ययः ५ कृपणः कः ? ६ उपसंहारः।

१—वयं मितं परिमितं स्वीयेनायेन कृतसीमनिर्देशं व्ययं मितव्ययमाचक्ष्महे, सा चेयं परिभाषा सर्वथैवास्य शीर्षकस्याभिप्रायं कुक्षीकरोति। परिस्थित्यादिनियन्त्रितस्य पुरुषसमूहस्य सर्वस्य कोऽपि निर्धारितो व्ययक्रमस्तु नैवास्ति यं मितव्ययमभिदध्याम, अतश्च यथास्वकीयायं संयम एव मितव्ययः स्वीकर्त्तव्यः।

२—मितव्यय एव धनाढ्यताया मूलं कारणम्, न ह्यायमात्रेण कस्यापि धनिकत्वं प्रमातव्यम्, तस्यायापेक्षयाऽधिकेन व्ययेन कृतेन सततमाभाव्ततया तथा व्यवहारायोग्यत्वात्।

अथ च यः प्रतिमासं दशैव रूप्यकाण्यर्जयति, स हि यदि नवैव प्रतिमासं व्यये नियोजयति तदा वर्षेणैकेन तस्य हस्ते द्वादश रूप्यकाणि सञ्चीयन्ते। एवमष्टौ वर्षाणि कुर्वता शतं सञ्चीयन्ते सत्यं मितव्ययशीलता स्पर्शमणिर्यस्य स्पर्शमात्रेण समृद्धयः समेधन्ते। सततश्रमशीलता सर्वथा प्रशस्या, परं सापि मितव्ययशीलता एवानुगामिनी सती फलति, अन्यथा केवलं श्रममात्रमुपहरति। यः केवलमर्जयति सञ्चयं न शिक्षते, तस्य जीवनं वृथा याति। इयञ्च मितव्ययशीलत स्वतन्त्रताया जननी, यो मितव्ययो न भवति, स क्षणे क्षणे ऋणं याचमानः परवशतापाशं सुदृढं करोति। मितव्ययस्तु स्वयमायमनुध्याय व्ययं करोति, तेन कदापि न याचनायां जायमानस्य ऋणग्रहणकाले वाऽनुभूयमानस्य क्लेशस्य भाजनं भवति।

अव्यवस्थितं हि जनानां स्वास्थ्यमाहुः, सति चास्वाथ्ये प्रतिबध्यत इवायस्तस्यां स्थितौ पूर्वसञ्चितमेव धनं जीवनं रक्षति। किञ्च वार्द्धकेपि विगतार्जनसामर्थ्यस्य प्राग्रक्षितमेव वित्तं शम्बलं भवन्ति एतदर्थमपि मितव्ययता सप्रयोजना मन्यते। आकस्मिकस्य व्ययावसरस्य विवाहादेरन्यस्य वा श्राद्धादेरुपस्थितौ प्रागनुष्ठिता मितव्ययशीलता कियदुपकुरुत इति त एव जानीयुर्ये भुक्ततन्मधुरफलाः।

३--एवमेतत्फलं प्रति जाते निर्विचिकित्से विश्वासे तदुपायचिन्तां प्रक्रान्ते निम्नलिखिताः प्रकारा अनुष्ठेयाः।

(क) यावानल्पो महान् वाऽऽयः स्यात्ततोऽल्पं ( यथासम्भवमात्रया व्यये नियोजनीयम्। एष नियमो न भज्येत।

(ख व्यये नियुक्तस्य प्रत्येकस्य पणस्य सार्थकत्वमनर्थकत्वं च चिन्तनीयम्। एकैकशः सञ्चिताः पणा रूप्यकाणि यथा भवेयुस्तथ स्वयं प्रवर्धन्ति।

(ग) किमपि मूल्यं कथं न भवेत्, किमपि वस्तु, यस्य मूल्यं तत्कालमेव न दातुं शक्यते, न क्रेतव्यम्। दास्यामानमूल्यकपदार्थक्रयणाभ्यास

क्रमशो वर्द्धमानमनोभिलाषतामुत्पाद्य मितव्ययशीलमपि पुरुषं ततः सिद्धान्तात्पातयति ।

( घ ) येन वस्तुना विना जीवनक्रमो न विपर्ययं व्रजेत्, सामाजिकी स्थितिर्न विषमा भवेत्, भाविकार्यक्रमो न विपद्येत, तस्य कृते जायमानां लालसां बलवन्निरुन्धीत, आवश्यकताया लघुभावो जनमात्रेण सत्कारेणोपपाद्यः अत्यावश्यकवस्तुभिन्नवस्तुक्रयणं पापतया जानते ज्ञानिनः ।

( ङ ) व्यर्थाडम्बरमात्रप्रयोजनं धनव्ययं सदाऽवलोकमानस्ततोऽवश्यं स्वं पृथक् स्थापयितुं प्रयतेत । एतादृशा आडम्बरप्रिया हि पुरुषा आडम्बरेण विवाहश्राद्धादौ वीतसर्वस्वा आवश्यकतमे स्वपुत्रादिशिक्षणेऽपि न क्षमन्ते, स्वस्य सन्तानस्य च स्थायिनं क्लेशमुत्पादयन्ति ।

( च ) आयव्ययलेखरक्षा मितव्ययताशास्त्रस्याक्षरावली । आयं व्ययं च पृथक् पृथक् स्पष्टभावेन लिखेत्, समये समये परीक्षेत च । कुत्र व्ययेऽनौचित्यं तत्सावधानं विभावयेत्ततः स्वस्य निवृत्तये प्रकारं चिन्तयित्वा तदुपयोगाय प्रयतेत । आयव्ययगणनापुस्तिकापरीक्षा हि वृथाव्ययनिवारणस्य महौषधिरिति निश्चयेन वक्तुं पार्यते । येऽपव्ययशीलास्ते कदापि स्वायव्ययलेखारक्षणे नोत्सहन्ते पापिन इव धर्मानुष्ठाने ।

४—ये उचितां शिक्षां नासादयन्ति तेऽधिकव्ययशीलतया विषद्यन्ते, अतो बालकानां शिक्षायै लघुमेकं कोशं तदाविपत्ये प्रतिष्ठापयेत्, तदुपयोगं च तथा शिक्षयेद्यथा भाविनि जीवने तस्य दृष्टिः कदाप्यन्धतमसावृते वृथाव्ययवर्त्मनि न मुह्येत्, प्रत्युत प्रकाशमवेक्षेत । स्त्रीणां तु मितव्ययशीलता गृहप्रबन्धशिक्षयैव सुलभोपार्जना । व्यये नियोजनीयं धनं ता एव रक्षेयुर्यथाविवेकं सत्यवसरे पुरुषस्य सम्मत्या वा तस्योपयोगं कुर्युः । एवं शिक्ष्यमाणो हि परिवारोऽल्पेऽप्याये प्रसन्न इव जीवनयात्रायां पुरस्सरति ।

५—बहवो हि मुखागतभाषिणो विविच्य व्ययशीलं कृपणमभिद-

धते, सत्यं कृपणता निन्दायाः स्थानम्, परं के कृपणाः? इति तु पुरस्ताद्विवेच्यताम्। वयन्तु 'सति धने तदुपयुक्तव्ययावसरेऽपि तदनुपयोगं कामयमाना एव कृपणाः' इति मन्यामहे, सत्यर्थराशौ क्लेशानुष्ठानं कापुरुषत्वम्, अत एव तदपि गर्हितम्। अत्र च विवेक एव शरणम्।

६—अतो जीवनस्य सफलताया निदानभूता प्रतिपदसावधानतया पालिता सती कामप्रसूरियं मितव्ययशीलता मानुष्यकमुन्नमयितुमवश्यं सेव्या बुद्धिमद्भिः। अत एव चाहुः—

'इदमेव हि पाण्डित्यमियमेव बहुज्ञता।
अयमेव परो धर्म आयादल्पतरो व्ययः'॥ इति।

—०—

## १६. व्यायामः

१. व्यायामस्य परिभाषादिः, २. व्यायामेन शरीरस्य विकासः, ३. व्यायाममहिम्ना दुरभ्यासेभ्यो रक्षा, ४. अस्य प्रभेदाः, ५. उपसंहारः।

१—येन कर्मणाऽनुष्ठितेन मनुष्यस्य तनोः (तद्द्वारा च) बुद्धेरुचितौ संस्कारोच्छ्रायौ भवतः, येन शरीरस्य सन्धिस्थलानि चलन्ति, धमन्यः स्पन्दन्ते, तद्विधया च रक्तं परिष्क्रियते, पाकक्रिया व्यवस्थाप्यते, सम्भवतां रोगाणामाक्रमणं प्रतिबद्ध्यते च, तत्कर्म व्यायामः। मनुष्याणां शरीरेण समं बुद्धेरतिघनिष्ठः सम्बन्धो वर्त्तते, शिक्षा यथा मनुष्याणां ज्ञानं परिमार्जयति, तथैव व्यायामस्तनुं समेधयति। एवं च मनुष्याणामिदं कर्त्तव्यं वर्त्तते यत्ते यथारुचि कमपि व्यायाममुपसेवेरन्। एष ह विदुषां समुद्गारः—'स्वस्थे शरीरे मतिरवतिष्ठते'।

२—अस्माकं देशस्य युवानोऽत्र विषये क्लैव्यदुदासते, ते करे करमाधाय वृथाऽवस्थानं सौख्यमकर्मण्यतां च धनिकतां मन्यमाना जीवनं व्यर्थतां नेतुमभ्यस्यन्ति। कतिपये विद्यार्थिनः स्वान्तनोरवस्थामपमत्याध्ययने श्राम्यन्ति, गुरूणां गौरवं वर्द्धयन्ति, परीक्षास्वपि च महत्या तरन्ति, परं पश्चात् प्रागनादृतेनैव स्वास्थ्येन प्रतिशोधबुद्ध्येव

हीयमानास्तेऽकाल एव कालकवलिताः सन्तः समाजस्य देशस्य परिवारस्य स्वस्यैव वा कामपि सेवां कर्तुं न पारयन्ति। यदि त एव कियन्तमेव कालं प्रत्यहं व्यायामे समर्पितवन्तोऽभविष्यन्नूनं तैः स्वेनैव सह समाजस्य जातेर्देशस्य च महती सेवा कृताऽभविष्यत्। यूरोपदेशवासिनो व्यायामे साधु ध्यानं ददते, ते कदापि व्यायामार्थं निर्धारिते समये कार्यान्तरं नानुतिष्ठन्ति, न केवलं यौवनं, किन्तु वार्द्धकम्—यत्र जनाः साधारणतः शरीरविषये ध्यानदानमनावश्यकं प्रतियन्ति, अपि नियतव्यायामविधानेन रमणीयतां प्रापयन्ति व्यायामस्य प्रभावेण च ते कदापि कष्टमयं जीवनं न यापयन्ति। अस्माकं देशे लब्धजन्मानस्तु जनाः कदापि व्यायामे मनो नार्पयन्ति तेन यौवनं यावत्परमात्मना प्रत्तां वर्द्धिष्णुतां सहायिकामासाद्य कथञ्चिच्चलन्ति, पश्चात्स्पृष्टमात्रे जरसा देहे कथञ्चिद्दिन एकदा निगीर्णामपि तण्डुलमुष्टिं जरयितुं न क्षममाणाय जाठराय वह्नये कुवाच्यशतं पुनरावर्त्तयन्तो भारभूतं जीवनं यापयन्ति। व्यायामस्यानादरेण जीवनस्य तान्यहानि दुर्गमाणि कष्टमयानि च जायन्ते, येषु तथा कर्तृणां कायिकी स्थितिर्विपद्यते।

४—ये नियमतो व्यायाममाचरन्ति, ते कतिपयेभ्यः कुत्सितेभ्यो रागप्रसूतेभ्यः कुकृत्येभ्यो रक्षिता भवन्ति, व्यायामाज्जायमाना हि तेषां दृढता चपलतायै चलितमात्राणि तदिन्द्रियाणि रश्मिष्ववादाय निरुणद्धि। एवं हि श्रूयते—यस्य शरीरे यावदोजो भवति, तस्य मनस्तावतीं शान्तिं रक्षतीति। किञ्च क्रोधो हि दुर्बलान् यथाऽभिभवति न तथा व्यायामदृढगात्रं सबलम्, क्रोधेन हि मनुष्या मानुष्यकाच्च्यवन्ते। 'क्रुद्धः पापं न कुर्यात् कः क्रुद्धो हन्याद् गुरूनपि' एतादृशादपि क्रोधाद्रक्षति व्यायामो बलवत्तासम्पादनविधया।

४—अस्य च व्यायामस्य बहवः प्रभेदाः सन्ति, अश्वारोहणं गुणवत्तरं व्यायामं ब्रुवते विद्वांसः। एतेन हि स्वनुष्ठितेन श्रमजयात्तनुः अगुणा भवति, रक्तसञ्चारेण कान्तिः प्राखर्यमायाति। परमिदं बहुव्यय-

समर्थैरेव धनिकैरनुष्ठातुं शक्यम् । जले सन्तरणमपि समधिकगुणो व्यायामः । एतेनापि श्रमजयः, सततसञ्चलनवशात्स्फूर्त्तिः; सन्धिस्थलेषु च चालनजन्मा बलवद्भावः, कान्तिप्रकर्षश्च समुद्भवन्ति । परमिममपि व्यायामं सर्वत्र सर्वास्ववस्थासु न सम्भविनं मन्यामहे, नहि सर्वत्रावगाहक्षमजलपूर्णा जलाशया लभ्याः, न वा तनोरस्वास्थ्ये मात्रयापि वर्त्तमाने प्लवनं हिताय ब्रूमहे, न वा सर्वत्र जले तरणं युज्यते, तरङ्गि हि जलं तदर्थं शस्यते । सम्प्रतिके वायुमण्डले यदा कन्दुकक्रीडनमपि व्यायामं साधुफलं समयोपयुक्तं च मन्यन्ते लोकाः, अतिमात्रो यदि न भवति, युज्यतेऽयं शरीरस्वास्थ्यसौन्दर्य साधनाय व्यायामः, परमयं व्यायामो मात्रामुत्सृज्य छात्राणां स्वास्थ्यं चुलुकयतीत्यपि प्रत्यक्षमीक्षामहे । तेनास्य व्यायामस्य मात्राया नियन्त्रणे सततं जागरूकताऽपेक्षिता, किञ्चायं व्यायामो नैकेन कर्तुं शक्यते, सहायसापेक्षतया प्रयोगस्य प्रचलितत्वात्, न च वृद्धानामत्र मनो रमते, न वा सर्वत्र तदुचितविरोपलब्धिरपि सम्भवतीति त्रिष्वपि प्रागुदीरितेषु व्यायामेषु दृष्टिं निक्षिपन्तश्चतुर्थं सर्वोपकारकं, सर्वस्यां स्थितौ, सर्वेषु स्थानेषु, सर्वत्र च समये विधातुं शक्यं 'भ्रमणं' मनोहरं नानाविधदृश्यदर्शनजनितनयनप्रसादं समस्तायाश्शरीरयष्टेश्चालनं व्यायाममभिनन्दयामः । प्रचलितमपि प्रायः सर्वेषु स्थानेषु वर्गेषु चेदमधिकपरिमाणेन । अत्र चात्यनुष्ठिते न कापि हातिरस्तीति सर्वोत्तमोऽयं रिमाणेन। अत्र चात्यनुष्ठिते न कापि हानिरस्तीति सर्वोत्तमोऽयं प्रकारः, प्रतिदिनमेका होराऽत्र नियुज्यमाना सर्वं व्यवस्थितं विधत्ते ।

५—अतः सर्वथा स्वास्थ्यं कामयमानैः स्वस्थ एव देहे स्वस्थस्य बुद्धिसन्तानस्य वासे विश्वसद्भिः 'धर्मार्थकाममोक्षाणारोग्यं मूलमुत्तमम् । तन्निघ्नता किन्न हतं रक्षता किन्न रक्षितम् ॥' इति च स्मरद्भिः सदा सेवनीयो व्यायाम इति ।

## २०. औद्योगिकशिक्षा

१ साधारणशिक्षाया जीवकोपार्जनाक्षमता, २ औद्योगिकशिक्षायास्तथाविधत्वम्, ३ औद्योगिकशिक्षाया अर्थः, ४ अस्याः प्रचारः, ५ उपसंहारः ,

१—साम्प्रतिकी साधारणशिक्षा न तया युक्तस्यापि पुंसो जीवनोपयुक्तद्रव्यार्जने साधनीभावं प्रपद्यते; सत्यमिदं दिनानुदिनं प्रत्यक्षतामृच्छति। जनाः पुरेव सम्प्रत्यपि साधारणशिक्षायां स्वस्य धनं नोपयोजयितुमभिलष्यन्ति, साधारण्या शिक्षयाऽधिगता योग्यता यस्या दासताया योग्यतां प्रापयति सा महतः सङ्घर्षस्य स्थानं मन्यते। पूर्वस्मिन् समये यया योग्यतया शतं रूप्यकाणि वेतने लभ्यन्ते स्म, सम्प्रति तया योग्यतया विंशतिरपि कष्टेन लभ्यानि। अधुना कार्यक्षेत्रं तथा जनसङ्कीर्णतां गतं यदेकत्र पदे रिक्ते सहस्रं प्रार्थनापत्राणि परापतन्ति। अध्ययनलभ्यानि पदानि तु समधिकभावेन प्रार्थिप्राचुर्येण सङ्कीर्णतमानि सञ्जातानि। जीवनसङ्ग्रामोऽहरहर्भीषणतां प्राप्नुवन् प्रतीयते। प्रथमं तण्डुलमुष्टिमपेक्ष्यैव कार्यान्तरे प्रवृत्तिरुपयुक्ता मन्यते लोकैस्तदुपाये चाप्रभवन्ती साधारणी शिक्षा लोकानामादरपात्रतया हीयते।

२—औद्योगिकी शिक्षा समीपस्थोपकरणगणेन तादृशान्युपयुक्तानि वस्तूनि निर्मातुं योग्यतां जनयति, तेन सङ्घर्षमये वातावरणेऽगत्वापि, किमपि द्रव्यमनपेक्ष्यापि साहायकमनुपलभ्यापि जीविकाक्षमद्रव्यमर्जयन्ति तथाशिक्षिताः। औद्योगिकशिक्षामधिगतवतः पुंसो जीविका न परावलम्बना, स हि यत्रेच्छति तत्रैव स्थितः स्वाधीनतया स्वपरिवारं पोषयति। कतिपये भारतीया अधुनापि शिक्षामिमां प्रतिष्ठाह्रासकरीं मन्यते, ते बुभुक्षितान् अध्यापकान् प्राड्विवाकांश्चाद्रियन्ते परं स्वार्जितद्रव्यभृतकुक्षीन् परकर्मकारानपमन्यन्ते। परं समयः समायाति यदेयं दृष्टिरपि स्वयं परिवृत्ता भविष्यति।

३—औद्योगिकशिक्षापदेन कस्यापि बालस्य शिक्षणीयस्य कस्यांचित् कलायां कुत्रापि विज्ञाने वा शिक्षणमभिप्रेयते, यत्र व्यावहारिकं

ज्ञानं जायते। यत्र शाब्दिकी शिक्षा—तत्राधिकृतान् उपवासयति-तत्रैव व्यावहारिकी शिक्षा तान् भोजयति। मन्यतामेको बालको दशवर्षदेशीयो विद्यालयं प्रविशति, तत्र १२ वर्षाणि व्यतियाप्य समस्ताया भुवः क्षेत्रफल कण्ठस्थयति, प्रदेशानां जनसङ्ख्यां, सर्वेषां देशानां शासनपद्धतिं च मुखे करोति, फलमेतस्य सर्वस्य किं भवति, प्रतिमासं सति भाग्यबलोद्रेके- त्रिंशद्रूप्यकाण्यर्जयति, स्वोदरमपि पूरयितुमपारयन् प्रियस्य परिवारस्य किमप्युपकर्त्तुमशक्तः प्रतिदिनं खेदमनुभवति, तस्यैव च सखाऽपर बालको यदि वर्षत्रयं वर्षचतुष्टयं वा साधारणशिक्षया सहैव 'प्रदीप यन्त्र' निर्माणे 'वस्त्र' वाने 'काष्ठपादुका' विरचन एव वा निपुणः क्रियते जातेऽपि वृत्तिकार्कश्ये स न बुभुक्षया पीड्यते, स्वाधीनभावेन बा व्यापार्य सुखं जीवति, परिवारं प्रीणयति, स्वान्तस्तोषं समधिगच्छ यमन्तः प्रसादं प्राप्नोति, का तृप्तिस्तस्य तुलनां कुर्यात् ?

४—इदं पुनरतिशोचनीयं यदीदृशगुणाया अपि शिक्षायाः प्रचा राजसत्तायाः प्रजावर्गस्य वा सबलः करावलम्बो नास्ति। प्रतिमण्ड प्रतिप्रान्तं वा विद्यालयो महाविद्यालयश्च न स्थाप्यते। स्थापितेषु द्वित्रेषु विद्यालयेषु महाविद्यालयेषु वा नास्याः प्रचुरः प्रचारः सम्भ तस्माज्जीविकायै यतमानेऽत्र देशे प्रतिग्राममेको लघुरपि औद्योगिकवि लयोऽपेक्ष्यते। न वा केवलेन प्रतिमण्डलं स्थाप्यमानेन विद्यालयेन कृ कृत्यता मन्तव्या, किन्तु सर्वविधा अपि प्रयासा अस्याश्शिक्षायाः प्र राय विधेयाः। यावदस्याः प्रचारो यथावन्न जायते तावदस्य देश प्रतिवर्षवर्द्धमानजनसङ्ख्यस्य कल्याणं नास्ति।

५—खेदः, एतादृशि समुचितेऽपि विषये लोकाः प्राक्तनमिथ्या ज्ञानजनितसंस्कारकृतेन दोषेणावश्यकं दृक्पातमकृत्वाऽन्यत्रैव ध्या मर्पयन्ति, नेदमुचितम्। यो बालः प्रारम्भत एवौद्योगिकीं शिक्षाम गच्छति, स यदि तदेव वर्त्म स्वजीवनाय गृह्णाति, न कदापि कष्ट जीवनं यापयितुं बाध्येत; भगवानस्य देशस्य जनताया हृदये शिक्षामि स्यनुरागं समेधयतु।

## २१. देशाटनम्

१ देशाटनं विनाऽध्ययनमपूर्णम्, २ देशाटनरहितः कूपमण्डूकः, संकुचित-दृष्टिश्च, ३ देशाटनेन दृष्टिर्विकसति, ४ दृष्टान्तादयस्तथोपसंहारश्च ।

१—देशाटनेनास्माकमध्ययनस्य भाग एकः पूर्यते, विना चादो नाध्ययनं सम्पूर्णं कथयितुं शक्यम् । अन्येषु देशेषु सद्यो विद्यालयीय-मध्ययनं समापितवतां कृते देशभ्रमणं परमावश्यकं वस्तु मन्यते, तेन तेषां ज्ञानं तदंशेऽपि पूर्तिमुपैति । अस्माकं देशे तु विद्यालयीयमध्ययनं समाप्तमिति सम्भावनायामेव विद्यार्थिनः क्वचिद्वेतनप्रदे पदे स्वं नियुक्तं द्रष्टुं प्रयतन्ते, भाग्यवशाच्च याते साफल्ये देशाटनायावसरमेवालभमाना आवश्यकात् परमरमणीयाच्च देशाटनसम्भवाज्ज्ञानाद्रहिता एवावति-ष्ठन्ते । यत्राध्ययनस्य फलं केवलं वेतनप्रदपदप्राप्तिरेव मन्यते, का कथा तत्र ज्ञानसाधनदेशाटनस्य कृते कपर्दिकाया एकस्यापि व्ययस्य । देशा-टनं ज्ञानवर्द्धकमिति पुरापि मन्यते स्म, तथा चायमुद्घोषः—

'देशाटनं पण्डितमित्रता च पाण्डित्यमूलानि भवन्ति चाष्ट' ।

२—यो मनुष्यो देशान्नाटति, तस्य कूपमण्डूकसादृश्यमक्षतम् । यथा कूपेऽवस्थितो मण्डूको यावत्कूपपरिमाणमेव जगदायामं मन्यते तावत्येव देशेऽवस्थितान् जन्तून् जानाति, ततोऽधिकं भूभागमत्यन्ततुच्छैः कृमिकीटैरध्युषितं, शून्यशून्यमनालोक्यं वृथाभूतं च समर्थयते, तथैव देशाटनरहितः शिक्षितोऽपि पुरुषः स्वदेशमेव विधातुः सृष्टौ मूर्द्धन्य-भूतं स्वमेवाचारं सदाचारं, स्वदेश्यानेवादर्शनरधौरेयान् अवगच्छ-ति । एवं स्थितौ च तस्य यथावद्वस्तुविवेकशक्तिर्नोद्भवति तत्फ-लति शिक्षावैधुर्यम् । मन्यतां यो वङ्गदेशे गृहीतजन्मा लब्धशिक्षश्च स पञ्चनदप्रदेशीयं वर्द्धमानश्मश्रुकचं धृतकरकङ्कणं लम्बमानकृपाणं च पश्यन्मानुषं सभ्यतासम्पर्कशून्यं वर्वरश्चोत्प्रेक्षेत, मद्रासप्रान्तीयं च सनपदं बृहद्‌गधौतपरिधानं समुपबृंहितदीर्घशिखं श्यामतनुं च वीक्ष-माणो द्वीपान्तरादागतवन्तं प्रतीयात् । एतादृशश्चासौ कदाचिदपि

वास्तविकं ज्ञानं नोपेयान्न वा भ्रातृभावं सह तैः स्थापयितुं प्रभवेत्। कृतपर्यटनो दृष्टतत्तद्भूभागश्च तत्र तत्र वसतां लोकानां व्यवहारादिकं परिचित्य तैः साकं सदेशतायाः सम्बन्धं दृढीकुर्यात्, तेन च सम्भवन्त-मुपकारं समधिगत्य प्रमोदेत।

३—देशाटनेन मनुष्यस्य दृष्टिर्विकसति, ज्ञानं समेधते, सहानु-भूतिरुत्पद्यते, मिथ्याभिमानो मिथ्याकल्पना चास्तंगच्छतः। कथं जीवि-तव्यं, कश्च जीवनक्रमः साधीयान्, कुत्र देशे वसद्भ्यः किं ग्रहणीयम् इत्यादि सुखं ज्ञायते देशाटने क्रियमाणे। सामाजिकव्यवहारेऽपि नव पदक्रमः शिक्ष्यते। पुस्तकेभ्यो यज्ज्ञानोमस्तत् काल्पनिकं प्रतीयते तदेव च प्रत्यक्षमीक्षितं सत् पुरोऽवस्थितमिव भवति। देशाटने तज्ज्ञानं जन्यते यदाधारीकृत्य संसारे प्रविष्टो निजं जीवनं व्यवस्थित क्रमं कुरुते।

देशाटनसम्भवेनोपकारेण च्छात्रान् लाभान्वितान् विधातुमेव विश्व विद्यालयीयच्छात्राणां सङ्घं शिक्षणसंस्थास्तानि तानि प्रसिद्धस्थला दर्शयितुं प्रेषयन्ति।

४—पुराकाले ये ज्ञानसम्पन्ना ज्ञानं सम्बलमादाय जगदुपकर्तुं चिन्तयँस्तथाऽऽचरँश्च, ते सर्वे देशाद्देशान्तरं बभ्रमुरेव। बुद्धो भगवा प्राग्यावच्छक्यं देशानभ्राम्यत्तदनन्तरमेव तद्बोध उद्बभूव। 'होम मिल्टन' प्रभृतयः पण्डिता अपि प्रसिद्धपर्यटका आसन्। यद्यपि स रस्माभिः समस्ताया भुवः पर्यटनं न सुकरं, परं स्वीयोऽपि दे सर्वात्मना पर्यटितः सन् महान्तमुपकारं करोति। पूर्वं यावत्यसुवि पर्यटनेऽन्वभूयत न तावती सम्प्रति। सुलभा सुखदा च यात्रा स समनुष्ठेया। तथा विधातारो हि युवानः स्वयं जीवनं सफलया सरण व्यतियापयितुं प्रभवेयुः।

—:०:—

## २२. स्वतन्त्रता

१ पूर्वाभासः, २ स्वतन्त्रतायाः सुलाभाः, ३ स्वतन्त्रता नोपहारे लभ्या, ४ उपसंहारः ।

१—आब्रह्मस्तम्बपर्यन्तम्, आ च मेरोर्यावती धातृनिर्मिता धरा न तत्र किमपि वस्तु तादृशं प्रियं जन्मिनां यथेयं स्वतन्त्रता । अस्य नाममात्रे गृह्यमाणे किमप्यनिर्वचनीयप्रमोदाप्लुतमिव जायते हृदयम् । इमां प्राणेभ्योऽपि प्रियतमां मन्यन्ते लोकाः । सुखं वियुज्यते प्राणेभ्यः, परं कष्टो वियोगः पुनरस्याः स्वतन्त्रतायाः । स्वतन्त्रतामन्तरा जीवनं परमात्मनोऽभिशापं प्रतियन्ति विवेकिनः । यानि वस्तूनि हीयमानानि परितापं जनयन्ति, तेषु सर्वप्रधानमस्याः स्थानम् । अस्याः स्वतन्त्रतायाः प्रतिकूला परतन्त्रता, सा च द्विविधा—

वैयक्तिकी, सामूहिकी च । प्रथमा दासभावादिना जन्या द्वितीया तु राष्ट्रस्य पारतन्त्र्यादिना समुत्पादनीया । अनयोः कतराऽधिकराद्ध-सीति निर्णयो न सुकरः, यथैव हि प्रथमा व्यक्तिविशेषस्य सर्वतोमुखं प्रचारं निरुणद्धि, सम्भवन्तमप्युच्छ्रायं बलादिवाकुञ्चयति, तथैव द्वितीया राष्ट्रस्य तेषु तेष्वङ्गेषु सम्भवन्तीं वृद्धिं नियन्त्रयति सर्वतोगामि समुन्नतिसूत्रं च सङ्कोचयति । परतन्त्रो जनो देशो वा स्वामीच्छया म्रियते जीवति च ।

२—स्वतन्त्रतया स्थितिर्हि महतः प्रसादस्य दशा, आत्मनि सर्वाधिकारस्य लाभो जगदधीशतायाः सदृशः । अस्यामवस्थायां किमपि क्लेशकरमुपलभमानमपि नावगम्यते, सुधाह्लदावगाहिन इव वपुषि स्फुलिङ्गकः अत एव चाहुः ।

> 'आत्माधीनशरीराणां स्वपतां निद्रया स्वया ।
> कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥"

अमूमेव चात्मतन्त्रतां शुद्धे स्वरूपे आत्मारामतामभिदधते दर्शनविदः । स्वतन्त्रतैव च केवलं शुद्धमानन्दं शान्तिं च प्रयच्छति, तदाहुः-

टी० ब्राउनमहोदयाः—'स्वतन्त्रतया जीवन् मुकुटमण्डितमस्तकानां राज्ञां स्पर्द्धामकुर्वाण एव भुवमनधिकुर्वन्नेव च राजराजः' इति। सर्वोपि जनः क्षणमात्रमपि स्वातन्त्र्यमासाद्य प्रसीदति, जीवने सार्वत्रिकी पुनः स्वतन्त्रता कतमां मात्रामानन्दस्य प्रादुर्भावयेदिति भुक्तभोगा एव जानीयुः।

३—इयञ्चोक्तगुणगौरवा स्वतन्त्रता न केनापि शासनाधिकृतेन दलेन जनेन वा स्वशासने वर्त्तमानाय देशविशेषाय जनवर्गविशेषाय वा प्रदेया, अधिकारत्यागभावनाया महर्षीणामपि मानसेषूदेतुमत्यन्त-कठिनत्वाद् अमुमेवार्थमाह भारविर्भीममुखेन—

धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेन्द्रसम्पदः।

ऐतिहासिकमपि ज्ञानं नात्रार्थे साक्ष्यं करोति-यदियं स्वतन्त्रता कस्मैचिदपि देशाय न केनापि दलेनोपायनीकृतेति, यत्र यत्र स्वातन्त्र्य-सङ्ग्रामः प्रचलितस्तत्र तत्र कति कति नाहुतीरग्रहीत्? कानि कष्टानि नासाहयत्? कतमां विषमतमां स्थितिं नोदभावयत्, यदि ज्वलच्चिता-प्रवेशोऽस्याः कृते कृतसङ्कल्पस्य जनस्य कृते चन्दनलेपः, तप्ततैलस्नानं शीतलजलावगाहः, उद्बन्धनं प्रियतमालिङ्गनं, कशाघातश्च सुखसंवाहनं जायते, का कथा कतिपयवर्षावस्थायिकाराप्रवासस्य सर्वस्वसमर्पणस्य वा? यः किमपि चैतन्यमाकलयति तेन ज्ञायेत, यदस्या एकस्यैकस्य परमाणोः कृते कष्टसहनस्य पर्वतोऽपेक्ष्यते येषु देशेषु जाता स्वतन्त्रता, तदीय इतिहासोऽत्र प्रमाणम्।

एवञ्च स्वतन्त्रतायाः प्राप्तये प्रयतमानेन देशेन सर्वथा सर्वाभिमुखं च कष्टं सोढुं सन्नद्धव्यं येन देवीयं प्रसद्यावतरेत्। अस्माकमपि हृदि यावत्स्वतन्त्रतायाः स्नेहो नोदयते; तावद्धतभाग्यस्य भारतस्योद्धारो न सम्भवति स्म।



# २३. आशा

१. अवतरणम्, २ आशया लाभः, ३ नैराश्यम्, ४. आशोज्जीवनप्रकारः ।

१—अहं विद्यार्थी प्रत्यहं प्रातरेव दैनिकं नित्यकर्म समाप्य पठितुं प्रारभे। कठिनं प्रयस्य ज्ञानाय परिश्राम्यामि। समये पाठशालायामुपतिष्ठामि। रात्रौ प्रकाशार्थं दीपं पुरोऽवस्थाप्य पुस्तकं पठामि। शीतातपक्लेशमगणयित्वा, दशतः कटुकीटांश्चाचेतयित्वा स्वीये पठनकर्मणि प्रवर्त्ते। इत्थं परिश्रमस्य प्रयोजनं पृष्टश्चाभिदधे—'परीक्षायामुत्तीर्णतामाशासे' इति।

कृषकः क्षेत्रं बहु मूल्यं दत्त्वा क्रीणाति, प्रत्यब्दं करं ददाति राज्ञे। ईति-भीतिमतिशयितसाधारणस्थितिं सुखं सहते। ग्रीष्मे ललाटंतपेऽपि सूर्ये मृत्स्नां अर्दयति, वपति बीजं, नानाकष्टैश्च क्षेत्रं निषिञ्चति, यदि चानुयुज्यते सर्वस्यास्य प्रयासस्य प्रयोजनं प्रत्युत्तरयति—'क्षेत्रेऽत्र सस्यसमृद्धिमाशासे' इति।

आशापदार्थः कः? कुत्राशयेऽस्य पदस्य प्रयोगः? प्रायोऽवगतो भवेदेतावताऽवतरणेनास्माभिः।

२—आशामेवावलम्ब्य जगदिदं चलति, जगति यावन्ति कार्याणि भवन्ति तानि तदाधारेणैव। महान्ति नगराणि, गगनचुम्बिन्योऽट्टालिकाः, स्वर्णखचितशिखानि मन्दिराणि, यन्त्रचालिताः कार्यकरा व्यापाराः, आपणाः, उत्सवाः, सर्वाणीमानीदानीं क्रियमाणतया दृश्यमानान्याशामेवोपजीवन्ति। यद्याशा न स्यात्को नाम जनो दुष्कराणीमानि कार्याणि कर्त्तुमीहेत? आशया हि मृतप्रायेऽपि देहे कियतः कालस्य कृते कापि कार्यक्षमा शक्तिरिवायाति, यया जनो बहु व्याप्रियते। यद्याशा न स्यात्, को नाम जनः सन्निपातग्रस्तस्य विगतसर्वचेष्टस्यापि मुमूर्षोर्जीवनाय पणमपि नियुञ्जीत?

इयं हि भगवत्याशा जीवनदीपस्य तदावरणं येनावृतोऽसौ मह-

त्यपि वातकृत उपद्रवे नेङ्गते; ( दुःखादिना नोपहन्यते ) बाह्येभ्यो दुःख-झञ्झावातेभ्यो निजं रक्षति। यदि दुःखमये सुखस्याशा नाभविष्यत् केनापि प्रकारेण दुःखमुत्तर्तु नाशक्ष्यत् लोकः।

३—आशाया अभावो नैराश्यम्, यदा हि जनो जीवनसङ्गरे युध्यमानो नाग्रतः प्रसरणस्य पन्थानं पश्यति तदा निराश इव भवति, जाते च नैराश्ये मनसि कष्टमिव भवति। परिस्थितौ चास्यां यद्याशान्तरमुत्पद्य तां स्थितिं नान्तर्दधीत, बहु नाम हीयते पुंसो दुःखेन विपर्यासितसकलसद्व्यवस्थस्य। आशया हि समधिष्ठिते चेतसि कुतोऽपि हेतोः कृतपदोऽपि पराभवो बलादिव व्यावर्त्यते। अत एव चाहुः-'आशा हि परमं सुखम्' 'नैराश्यं परमं दुःखम्'।

४—एवं ज्ञाते चास्या आशायाः सुखमयस्वभावकत्वे सदेदृशः प्रबन्धः करणीयो येनाशासूत्रं न च्छिद्येत, तथा सिद्धिश्चासम्भाव्यविषयकशाऽननुष्ठानेन सम्भवति। बहवो हि जना अनिश्चितागममायं मनसि कृत्य स्वं व्ययं वर्द्धयन्ति, परमलब्धे तस्मिन्नाये ते कष्टमनुभवन्ति। नहि मेघमाकाशे प्रसरन्तमीक्षमाणो जलप्लवं मनसि सम्भाव्यं स्वं जलपूर्णकलशं भिन्दन् बुद्धिमत्तया गण्येत। अतः सर्वदा स्वसाध्यकार्यविषयकाशामेव पुष्णञ् जनो जातायां सिद्धौ पुनराशान्तरं पुष्णाति। क्रमश्चायमनुवर्त्तमानो जीवनं पुरश्चालयति।

सिद्ध्यत्सु हि कार्येषु जनानामाशासूत्रमनुवर्त्तमानमवतिष्ठते, तत्र चेश्वरे विश्वासः सहायतां धत्ते। यो हीश्वरे विश्वसिति तस्य बुद्धौ प्रतिफलति कस्यापि महतः सहायकस्य करस्य प्रतिबिम्बः, तेन तदीयाशाया भङ्गस्य सम्भावना हीनतामायाति। इदं हि जगदीदृश एवाशासूत्रेऽवलम्ब्यमानं पुरः कृष्यते नियत्या। भगवान् भूतभावनो भवतु सर्वाशापूरकः।

---

## २४. स्त्रीशिक्षा

१. अवतारणा, २. स्त्रीशिक्षाया आवश्यकता, ३. स्त्रीशिक्षाया लाभः, ४. स्त्रीशिक्षा कीदृशी हिता, ५. उपसंहारः ।

१—येन शारीरिक-मानसिक-नैतिकशक्तीनां मनुष्यगतानां विकासः सञ्जायेत तदेव शिक्षापदेनाभिदधति । मनुष्याणां हि तास्ताः शक्तयः शिक्षया विकसन्ति, विकसितशक्तयश्च लोकाः स्वं कर्त्तव्यं परिचिन्वन्ति, आचरणं परिनिष्ठापयन्ति, धर्ममनुरुध्यन्ते । अतश्च यया ( शिक्षया ) स्त्रियः स्वं कर्त्तव्यं परिज्ञाय स्वे धर्माचरणे पालयेयुः सा स्त्रीशिक्षा कथ्यते ।

२—पुरुषाणां सहायतया परिवारस्य पालनं, स्ववालकेषु गुणगण-साहसोत्पादनं सांसारिककार्य-क्लिष्टानां पतिपुत्रादिप्रियपरिवार-परिजनानां स्वैर्मधुरैरालापैः प्रसादनं च स्त्रीशिक्षाया लाभमाहुर्विचारकाः । यदि साध्वी शिक्षा न स्त्रीभिरधिगता कार्याणीमानि साधु न सिद्धयन्ति, वैरस्येन वैषम्येण च क्रियमाणान्यपि कार्याणि न सन्तोषायालं भवन्ति । वहवः पुनर्जनाः स्त्रीणां शिक्षायां विप्रतिपद्यन्ते, तेषां हि मते ताः पाके, गृहप्रवन्धे, वालानां पोषणे चाधिक्रियेरन्, शिक्षिताः सत्यो हि स्त्रियो नश्यन्ति, लब्धाध्ययनप्रकाशाश्च ताः पुरुषैः सह स्पर्द्धेरन्, परमिदं तेषां दुरुक्तं पुरतः प्रदर्श्यमानाभिर्युक्तिभिर्निराकरिष्यते ।

३—( क ) प्रवन्धः पाकालयस्य न सर्वसाधारणानुष्ठेयः, तदर्थमपि ज्ञानराशिरपेक्ष्यते, अत एव च द्वित्रा नलभीमादय एव पाकपण्डिताः परिगणिताः, अत्र विषये नलपाकप्रभृतयो ग्रन्था अपि दृश्यन्ते, न चान्तरेण साधीयसीं शिक्षां कस्यापि पाककलायामीदृश्यां सम्भवति प्रवेशः । अतः स्त्रीशिक्षाऽपेक्षिता ।

( ख ) स्त्रियो हि गृहाधिष्ठात्र्यो मन्यन्ते, जगति यावन्तोऽभ्युदय-

भाजो दृश्यन्ते जनास्तेषां देव्योऽवश्यं प्रबन्धचतुराः स्युः, अन्यथा बह्वर्जयन्तोपि पुरुषाः स्त्रीभिरनावश्यकवृथाव्ययविनियुक्तधनास्सन्तोऽत्यर्थमुद्विजेयुः क्लेशं च सहेरन् ।

( ग ) बालाः शिक्षिताः स्युरित्यपि गृहस्थानां कर्त्तव्येषु प्रधानं कर्त्तव्यम् । एतच्च कार्यं यथा दयाद्रुतचित्ताभिः स्त्रीभिः साधु सम्पाद्येत न तथा पुरुषैः, अशिक्षिताश्च मातरः कथमिव तदनुष्ठाने प्रभवेयुः । अतः साधु विना द्रव्यव्ययं सन्ततीनां जीवनं शिक्षया समुत्कर्षयितुमपि स्त्रीणां शिक्षणमावश्यकम् ।

( घ ) 'सत्यां शिक्षायां स्त्रियो नश्यन्ति' इति यदुक्तं न तन्मनोहरं, सत्यं दुश्शिक्षया तथा भवति, हेया च सा, परं शिक्षा तु तासां पातिव्रत्ये निष्ठां, प्रेमपरायणतां, दासीपदगौरवं च समेधयति ।

(ङ) शिक्षिताः स्त्रियः पुरुषैः स्पर्द्धेरन्नित्यप्यलीकमेव वचः, शिक्षया जनितविवेकानां तासां कर्त्तव्यज्ञानोदये जाते स्पर्द्धाबुद्धेरेव बाधपराहतेः, प्राचीनमादर्शं पुरतः कृत्वा प्रदीयमानया शिक्षया मनसः साधु पथे प्रवृत्तिः सम्पाद्यते तथा च स्पर्द्धायाः कथैव नोदयते ।

४—साधुनि तत्त्वावधाने भारतीयमादर्शं पुरस्कृत्य दीयमानया स्त्रीशिक्षया देशस्य समाजस्य जातेश्चोपकारो भविष्यति । शिक्षाया नियुज्यमाना विषयाश्च—परिवारपरिचालनप्रकारः, चिकित्साशास्त्रम्, इतिहासभूगोलौ, नीतिशास्त्रम्, इत्येते स्युः । स्त्रीणां कृते विश्वविद्यालयीयोपाधिप्राप्तिर्नापेक्षिता, न वा केवलमक्षरमक्षिकापरिचयमात्रमुपयुज्यते, उभयथापि दोषदर्शनात्, अतिशयितशिक्षाया गृहप्रबन्धेऽनुपयुक्तत्वादक्षरज्ञानमात्रेण च शिक्षोद्देश्यासिद्धेः । अतः साधु विविच्य निर्धार्यमाणा शिक्षापद्धतिः स्त्रीणां सुखोदर्काय युज्यते ।

५—यत्र परिवारे स्त्रियो न शिक्षिताः सत्यं स परिवारो दुःखभाक्, कलहालस्यवैराणां सततप्रतिष्ठानास्पदस्य तादृशस्य परिवारस्य दुःखभागिताया अविवादसिद्धत्वात्, दारिद्र्यं, बालमूर्खत्वं,

परस्परमप्रीतिश्च सदा वसतीति ध्यात्वा सर्वैः स्वाः बालिकाः शिक्षणीयाः, स्त्रीणां शिक्षया हि कुलमुज्ज्वलं श्रीसमृद्धिश्च समुदयत इति ।

---

## २५. लोभः पापस्य कारणम्

१ अवतरणम्, २ लोभप्रभावः ३ लोभफलम्, ४ लोभत्यागे लाभः, उपसंहारः ।

१—अन्यदीयस्य धनस्य पदार्थान्तरस्य वा लाभाय यो मनसि नुष्याणां दुरभिलाष उदयते स एव लोभः, अभिलाषमात्रं न लोभः, वेनोपार्जितस्य, श्रद्धयाराधिताद् देवद्विजादेर्वा प्रार्थ्यमानस्य वस्तुविशेस्यालिभाषे लोभव्यवहाराभावात् । वस्तुतस्तु—अनुचितक्रमेण लब्धुमिच्छैव लोभः अत एव तरुशिखरवर्त्तिपरिणतफललिप्सया तरुमारोहतो दैववशाज्जाते विनिपाते 'लोभेनात्मा व्यापादितः' इति यवह्रियते ।

२—लोभे एतावती मोहनी शक्तिस्तिष्ठति यदनेनावृते चेतसि सत्प्रवृत्तयो न स्थितिमुपयन्ति । योऽद्य स्वचारित्रगौरवेण सम्मानासाद्य कुलस्य समाजस्य, अभिजनस्य च मुखमुज्ज्वलतामनैषीत्, स एव श्वो लोभवशंवदः सन्, किमपि चौर्यादि कुकर्म कृत्वा व्रीडावनतशिराः सन् कुत्रापि कोणे स्वं मुखं गोपयति ।

अयं हि लोभः साधुमसाधुं ज्ञानिनमज्ञानिनं च कठिनस्वान्तं करोति, न्यायान्यायविवेकं भ्रंशयति, मनुष्यस्य मनुष्यतां च नाशयति । लोभोपहतचेतनो हि जनोऽकार्यमपि कार्यं मन्यते, क्षुद्रस्योपि वस्तुनः सत्यभाषणाय जलाञ्जलिं वितरति, निन्दां सहते, नरहत्यासदृशेऽपि कुत्सिते घोरे च कर्मणि प्रवर्त्तते । लोभेन कदर्थितस्य कर्तव्यज्ञानं तथा विपद्यते यथासौ दरिद्राणां मुखात् केवलं बलादादत्ते सतीनां सतीत्वं नाशयति, प्रियां पत्नीं च पत्या वियोजयति ।

भाजो दृश्यन्ते जनास्तेषां देव्योऽवश्यं प्रबन्धचतुराः स्युः, अन्यथा बह्वर्जयन्तोपि पुरुषाः स्त्रीभिरनावश्यकवृथाव्ययविनियुक्तधनास्सन्तोऽत्यर्थमुद्विजेयुः क्लेशं च सहेरन् ।

( ग ) बालाः शिक्षिताः स्युरित्यपि गृहस्थानां कर्त्तव्येषु प्रधानं कर्त्तव्यम् । एतच्च कार्यं यथा दयाद्रुतचित्ताभिः स्त्रीभिः साधु सम्पाद्येत न तथा पुरुषैः, अशिक्षिताश्च मातरः कथमिव तदनुष्ठाने प्रभवेयुः । अतः साधु विना द्रव्यव्ययं सन्ततीनां जीवनं शिक्षया समुत्कर्षयितुमपि स्त्रीणां शिक्षणमावश्यकम् ।

( घ ) 'सत्यां शिक्षायां स्त्रियो नश्यन्ति' इति यदुक्तं न तन्मनोहरं, सत्यं दुश्शिक्षया तथा भवति, हेया च सा, परं शिक्षा तु तासां पातिव्रत्ये निष्ठां, प्रेमपरायणतां, दासीपदगौरवं च समेधयति ।

(ङ) शिक्षिताः स्त्रियः पुरुषैः स्पर्द्धेरन्नित्यप्यलीकमेव वचः, शिक्षया जनितविवेकानां तासां कर्त्तव्यज्ञानोदये जाते स्पर्द्धाबुद्धेरेव बाधपराहतेः, प्राचीनमादर्शं पुरतः कृत्वा प्रदीयमानया शिक्षया मनसः साधु पथे प्रवृत्तिः सम्पाद्यते तथा च स्पर्द्धायाः कथैव नोदयते ।

४—साधुनि तत्त्वावधाने भारतीयमादर्शं पुरस्कृत्य दीयमानया स्त्रीशिक्षया देशस्य समाजस्य जातेश्चोपकारो भविष्यति । शिक्षाये नियुज्यमाना विषयाश्च—परिवारपरिचालनप्रकारः, चिकित्साशास्त्रम् इतिहासभूगोलौ, नीतिशास्त्रम्, इत्येते स्युः । स्त्रीणां कृते विश्वविद्यालयीयोपाधिप्राप्तिर्नापेक्षिता, न वा केवलमक्षरमक्षिकापरिचयमात्रमुपयुज्यते, उभयथापि दोषदर्शनात्, अतिशयितशिक्षाया गृहप्रबन्धेऽनुपयुक्तत्वादक्षरज्ञानमात्रेण च शिक्षोद्देश्यासिद्धेः । अतः साधु विविच्य निर्धार्यमाणा शिक्षापद्धतिः स्त्रीणां सुखोदर्काय युज्यते ।

५—यत्र परिवारे स्त्रियो न शिक्षिताः सत्यं स परिवारो दुःखभाक्, कलहालस्यवैराणां सततप्रतिष्ठानास्पदस्य तादृशस्य परिवारस्य दुःखभागिताया अविवादसिद्धत्वात्, दारिद्र्यं, बालमूर्खत्वं,

परस्परमप्रीतिश्च सदा वसतीति ध्यात्वा सर्वैः स्वाः बालिकाः शिक्षणीयाः, स्त्रीणां शिक्षया हि कुलमुज्ज्वलं श्रीसमृद्धिश्च समुदयत इति ।

## २५. लोभः पापस्य कारणम्

१ अवतरणम्, २ लोभप्रभावः ३ लोभफलम्, ४ लोभत्यागे लाभः, उपसंहारः ।

१—अन्यदीयस्य धनस्य पदार्थान्तरस्य वा लाभाय यो मनसि नुष्याणां दुरभिलाष उदयते स एव लोभः, अभिलाषमात्रं न लोभः, वेनोपार्जितस्य, श्रद्धयाराधिताद् देवद्विजादेर्वा प्रार्थ्यमानस्य वस्तुविशेस्यालिभाषे लोभव्यवहाराभावात् । वस्तुतस्तु—अनुचितक्रमेण ब्धुमिच्छैव लोभः अत एव तरुशिखरवर्त्तिपरिणतफललिप्सया तरुारोहतो दैववशाज्जाते विनिपाते 'लोभेनात्मा व्यापादितः' इति यवह्रियते ।

२—लोभे एतावती मोहनी शक्तिस्तिष्ठति यदनेनावृते चेतसि त्प्रवृत्तयो न स्थितिमुपयन्ति । योऽद्य स्वचारित्रगौरवेण सम्मानासाद्य कुलस्य समाजस्य, अभिजनस्य च मुखमुज्ज्वलतामनैषीत्, एव श्वो लोभवशंवदः सन्, किमपि चौर्यादि कुकर्म कृत्वा व्रीडावनतशिराः सन् कुत्रापि कोणे स्वं मुखं गोपयति ।

अयं हि लोभः साधुमसाधुं ज्ञानिनमज्ञानिनं च कठिनस्वान्तं करोति, न्यायान्यायविवेकं भ्रंशयति, मनुष्यस्य मनुष्यतां च नाशयति । लोभोपहतचेतनो हि जनोऽकार्यमपि कार्यं मन्यते, क्षुद्रेभ्योपि वस्तुभ्यः सत्यभाषणाय जलाञ्जलिं वितरति, निन्दां सहते, नरहत्यासदृशेऽपि कुत्सिते घोरे च कर्मणि प्रवर्त्तते । लोभेन कदर्थितस्य कर्तव्यज्ञानं तथा विपद्यते यथासौ दरिद्राणां मुखात् केवलं बलादादत्ते सतीनां सतीत्वं नाशयति, प्रियां पत्नीं च पत्या वियोजयति ।

३—लोभिनो लोभस्य यावत्यधिकमात्रा प्रवृत्तिरपि तदनुसा॑
णैव घृणिता, शतमर्थयमानो निभृतमनाश्रितप्राणघातचेष्टश्च चौर्यमा॑
रति, सहस्रमीप्सुश्च साहसेन चौर्ये प्रवर्त्तते, लक्षं लिप्सुर्दलबद्धां दस्
तामाश्रयति, ( औरङ्गजेबवत् ) साम्राज्यमधिजिगमिषुश्च भ्रातॄन् मा
-यति, पितरं च क्लेशयति। लोभिनो हि जनाः स्वनिन्दां सहमानाः प
कीयसम्पदपहरणप्रवृत्ता धृतास्सन्तो नानविधां यातनां भुञ्जते, लो॑
नाधिकं भुञ्जाना नानाविधै रोगैश्चुलुकितस्वास्थ्या अकाल एव का॑
कवलिता भवन्ति।

४—यो हि जनो वस्तुतो मनुष्य जीवनं यापयितुमिच्छेत् ते न मनुष्यं
चित इन्द्रियसंयमः सेवनीयो लोभश्च दमनीयः। लोभे त्यज्यमा
मनुष्यस्यात्मा बलवद्भावं भजति। केनापि विश्वस्य भवति न्यस्मा
निधि यदि समये भवान् परावर्त्तयति तदा भवदीयं गौरवं न हीयत
अथ लोभमहिम्ना तदन्यथा पन्था आश्रीयते सदा क्ते पतित आत्म
लज्जापयोनिधौ। एवं करणे सति लोकानां घृणापूर्णस्य दृक्पातस्
पात्रत्वमुपैष्यति भवान्। मानुष्यकं भवन्तं हित्वा पलायेत, पशुत्वं
भवति स्वं पदं विदधीत। अयमपि नियमो नास्ति यद् यो लोभ
नास्ति स सदा दरिद्र एव तिष्ठतीति। दानिनो निर्लोभाश्चापि पुरु
धनिनः कीर्त्तिभाजश्च दृश्यन्ते। अतो लोभमाश्रित्य वृथा कीर्त्तिलभिस्व
-रूपयोग्यतां विपादयन्ति लोभोपासकाः।

५—अतः स्वाभाविकीं मानसिकीं चोन्नतिं कामयमानैरारम्भत ए
लोभत्यागाय यतनीयम्, आदित एवात्र विषये विधीयमानोऽभ्यास
एव परिणामे महता वेगेन सम्भवन्तं लोभकृतमभिभवं निरोद्धुमोष्टे
आवश्यकश्च लोभस्य त्यागः, तस्य परिणामे विपदावहत्वदर्शनात्
क्षीरे पतन्तीनां मक्षिकाणां, कर्कटधृतगलस्य बकस्य च दृष्टान्तमत्रो
पस्थापयन्ति पण्डिताः। अमुमेवार्थसारमत्र निधायाहुः 'लोभ
पापस्य कारणम्'—इति।

## २६. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन

अथवा

## कर्तव्यपालनम्

१. परिचयः, २ कर्त्तव्यपालने लाभः, ३. उदाहरणम, ४. एतदभावे क्षतयः, ५. उपसंहारः।

१—स्वेच्छया, परकीयनियोगेन वा मयाऽविरोधमङ्गीकृतवता निधीयमानः कार्यभारो मे कर्त्तव्यम्, अस्यैव कर्त्तव्यस्य पालनम् अस्माकं सामाजिकानि दैशिकानि जातीयानि च बन्धनानि निर्माति। मनुष्याणां जीवनं कर्त्तव्यपरम्परयोपनिबद्धम्। आजन्मनो मरणपर्यन्तं मनुष्याः कर्त्तव्यपालन एव नियुज्यन्ते। तेषु कर्त्तव्येषु बहूनि परमात्मना समर्प्यन्ते बहूनि चास्माभिः स्वयमाधीयन्ते। एतच्च कर्तव्यं प्रतिव्यक्ति भिद्यते।

२—कर्तव्यपालनमेव वस्तुतो मनुष्याणां मनुष्यत्वं महत्त्वं च सृजति, संसारे नानाविधा मनुष्याः सन्ति, परं सर्वे कर्तव्यपरायणा न भवन्ति। यः कर्तव्यं पालयति स एव समाजस्य रक्षक आदर्शभूतश्च मन्यते, सर्वेषामादरं चाधिकरोति। अत्र संसारे या जातिर्यावत्यां मात्रायां कर्तव्यनिष्ठा तया तावती समुन्नतिः कृता। कस्यापि समाजस्योन्नतिस्तावन्न भवति यावत्तदवयवभूता जनाः प्रत्येकं स्वं कर्तव्यं न चेतयन्ते, न पालयन्ति च।

३—कर्तव्यपालनाय मनसो दृढता परमापेक्षिता। जीवनसंग्रामे नानाविधा विघ्नबाधाः समुपस्थाय कर्तव्यपालनं प्रतिबध्नन्ति। तत्र कतिपये मनुष्या मुह्यन्ति, परं कर्मवीरास्तत्रापि स्वं कर्तव्यमनुस्मरन्ति पालयन्ति च। यस्य हृदयं दृढं नास्ति, स लज्जया घृणया भीत्या च कर्तव्यपालनात् पृथक् संजायते, परं हृदये दृढतां दधानाँस्तु कापि लौकिकी शक्तिः कर्तव्यपालनान्न च्यावयति। जाते हि कर्तव्यज्ञाने तद्विरोधिभावाः स्वयमन्तर्धातुमारभन्ते। अस्यैव कर्तव्यपालनपरायणत्वस्य प्रभावेण प्रातः-स्मरणीयनामा महामना राजा हरिश्चन्द्रो निजे नयनकनीनिकापेक्षया प्रियेऽपि पुत्रे रोहिताश्वे दाहनीये स्वां महिषी-

मपि श्मशानकरमकम्पितस्वरमयाचत, परशुरामश्च पितुर्वचनं रक्ष मन्यमानो जननीं रेणुकां परशुधारया गलेऽच्छिनत्, आधुनिकेऽपि युगे विद्यासागरेश्वरचन्द्रगान्धिमहात्मप्रभृतयस्तानि तानि कार्याणि कर्त्त व्यपालनपरायणतयैव व्यधिषत, यानि कर्त्तुं सर्वसाधारणः कम्पेतैव न केवलमस्माकं भारते किन्तु देशान्तरेऽपि महानस्यादरः। इंगलैण्डदे आधुनिक एव युगे गैस्काइन-जजमहोदयो निजस्य राज्ञस्तनयायै कारावासदण्डमदात्।

४—यः स्वं कर्त्तव्यं न पालयति, स स्वस्य परिवारस्य, समाजस्य देहस्य च महतीं क्षतिं विधत्ते। मन्यतां यदि पिता स्वयं कर्त्तव्यं स्वस सन्तानस्य शिक्षणं न करोति, तदा दुष्टासु वृत्तिषु व्यासक्तस्तदीयः पुत्र किं ग्रामं नोपद्रवति, परिवारं न पीडयति, समाजं न क्लेशयति, सङ्कोचयति वा निजया नीचवृत्त्या। राजा यदि प्रजानां रक्षाया उपाये न दत्तावधानो भवेदवश्यमसौ देशो विपद्येत, राज्ञोऽकर्त्तव्यनिष्ठत्वात्। एव मेव प्रजास्वपि राजनि विरज्यन्तीषु तासां क्षतिरेव भवति कर्त्तव्यराजभ क्तिविमुखत्वात्तासाम्। एवमेवान्यत्रापि कल्पनीयम्।

५—कर्त्तव्यपालनं जीवनस्य वास्तविकं महत्त्वस्थानम्। अस्मा भिश्चास्य महत्त्वस्योपलब्धयेऽवश्यमायसनीयं, यस्य देशस्य समाजस्य वा जनाः पृथक् पृथक् सङ्घातभावे च कर्त्तव्यपालनं प्रति सतर्कास्ते तेषु देशेषु समाजेषु च लक्ष्मीः स्वं स्वाभाविकं चाञ्चल्यदोषमपास्य निवसति। अतोऽस्माभिरपि कर्त्तव्यपालनप्रवणैर्भाव्यम्, एवं हि सर्व विधोन्नतिभाजनं स्याम वयं नान्यथेति।

## २७. जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

अथवा

## देशभक्तिः

१ परिचयः, २ वास्तवदेशभक्त्या मनुष्यो देशस्य गौरवं ध्यायति, ३ अस्याः सम्पत्तिमन्तरापि साध्यत्वम्, उपसंहारः।

१—स्वस्य देशस्य कृते मनुष्याणां हृदये य आदरस्स एव 'देश-

भक्तिरित्याख्यायते; अर्थाद् यस्मिन् देशे यस्य जन्म तं देशं प्रति तदीया भक्तिर्देशभक्तिपदेनाभिलप्यत इति, इयमतिपूता मनोदशा मानवानां मनसि तिष्ठन्ती तदुद्द्योतयति, ते च मानवाः सभ्या असभ्या वा स्युरत्र न कोपि निर्बन्धः। जगतोऽन्येभ्यो देशान्तरेभ्यो निजे देशे स्नेहाधिक्यमेवास्याः स्वरूपम्, तथा चाह कूपरः 'अहम् इङ्गलैण्डदेशं सत्स्वपि तत्र बहुषु दोषेषु सर्वतोऽधिकं स्नेहस्य भाजनं मन्ये' इति। एतदनुध्यायैव श्लोकोप्ययमारच्यत—'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'।

२—मनुष्याणां मनसि जाते देशभक्तिप्रवेशे तदीयं जीवनमेव देशस्य कृते भवति, ते तत आरभ्य तदीयां स्थितिमुन्नमयितुमेव प्रयतन्ते, ते तथैव तदीयस्य सम्मानस्याभिलाषुका जायन्ते, यथा गुरुभक्तो निजगुरोः, तादृशा हि मानवाः प्रतिक्षणं सर्वविधमपि त्यागं स्वीकर्तुं सन्नद्धाः न केवलमेतावतैव निवृत्ततर्षाः, परं सत्यामावश्यकतायां ते स्वान् प्राणानपि पणीकर्तुं कृतसङ्कल्पास्तिष्ठन्ति, एतादृशाश्च देशभक्ता न कस्याञ्चिदपि दशायां स्वसिद्धान्ताच्च्यवन्ते, अत एव च परमेश्वरस्य लोकस्य च स्नेहमर्जयन्ति।

३—अस्यां च देशभक्तौ सम्पत्तेरावश्यकता नापतति येन धनिजनमात्रविधेयता स्यात्, न वा प्रतिपदं दीर्घदोर्घस्य त्यागस्यैवावश्यकत्वमस्ति। सर्वास्वप्यवस्थासु सर्वैरपि मनुष्यैरात्मरुच्या स्वनिर्णीतक्रममनुसृत्य विधातुं शक्येयं देशभक्तिः, तदीया मात्रा लघ्वी बृहती वा भवतु, न विशेषे विदुषामिमाग्रहः। सम्पदागमं प्रसिद्धिं चाननुरुध्य, स्वशक्त्यनुसारेण लघुतमेनापि सदुपायेन क्रियमाणा देशभक्तिर्वस्तुतो देशभक्तिपदमधिकरोति, यद्येतावता देशस्य कोपि महाँल्लाभो नास्ति, माऽस्तु, हानिरपि नास्तीदमेव बहु। इयं च देशभक्तिर्मनुष्यमात्रस्य कर्त्तव्या, बाध्यते चानया मनुष्यमात्रस्य मनुष्यता, कस्यापि पुरुषस्य जीवनं, चिन्तनं, कार्यानुष्ठानं च यदि स्वदेशस्य कृते भवति तदा तस्य धन्यता। कस्य जनस्य देशभक्तिः कियतीति परीक्षायां तदीयस्य

त्यागस्य मात्रायाः परीक्षणं नोपयुक्तः पन्थाः, मन्यतामेको धनिको दश-लक्षमिता मुद्रा देशस्य सेवायां नियोजयति, एकश्च भिक्षुर्दिवसं भ्रान्त्वा पञ्चपणानासाद्य तानेव देशार्थं समर्पयति, कोऽनयोर्भक्ततर इति जिज्ञासायां यदि धनगौरवं परीक्षासाधनं मन्येत प्रथमोऽधिगच्छे-त्प्रामुख्यं, स्नेहे पुनः परीक्षासाधनत्वेन स्वीक्रियमाणे चरमस्योत्कर्षः सिद्ध्यति। युज्यते चेदम्, न कोऽपि देवो द्रव्यगौरवे दत्तावधानो मनोऽनादरभाजनं विधातुं क्षमः। एष हि समाजस्य दासभावं चिरान्नि-षेवमाणस्य पतिताया मनोदशायाः परिणामो यदखिलेष्वपि क्षेत्रेषु धनिकाः कृतपदार्पणमात्राः पुरस्सरास्सन्तोऽधिकस्यादरस्य भाजनानि विधीयन्त इति।

देशभक्तौ भूमिकाभूतायाः स्वदेश्यवस्तुषु प्रीतेः पालनमात्रेऽपि विधीयमाने कियत्या मात्रया देशभक्तिः कृता भवतीति ततोऽधिकां सेवां कुर्वन्तो भृशं देशभक्ताः कथयितुं शक्याः।

अस्य देशभक्तिवह्नेर्ज्वाला यस्य हृदये कृतास्पदा तस्य कार्यान्तरेभ्यो विरक्तिर्जायते, जीवनसाधनमात्रमर्थयमानस्य तस्य जातायामपि कार्या-न्तरप्रवृत्तौ तदर्थतामात्रमवगन्तव्यम्। उदाहरणानि चात्र बहूनि सम्भवन्ति, महात्मगान्धिप्रभृतयो देशभक्ताः प्रसिद्धा एव विदेश्यदेश-भक्तेष्वपि बहवो नामग्राहं--डिवेलरा-मैजिनो-प्रभृतयो निर्दिश्यन्ते, तेषां हि कष्टमयविश्रामं च जीवनं कं न सचेतसं स्वाभिमुखमाकर्षेत्?

४--देशोऽसौ धन्यो यदीयासु सन्ततिषु देशभक्ताः प्रसूयन्ते यानाश्रित्य तदीय उत्कर्षः प्रसिद्ध्यति, धन्याश्च ते देशभक्ताः कल्पद्रुम येषां घनासु च्छायासु देशः सुखशान्तिमृच्छति। यत्र च देशे नेदृश देशभक्ता जायन्ते तस्य देशस्य भाग्यं चिराय सुप्तमिव प्रतीमः। भगवान-स्माकं देशे देशभक्तानेव भूयसो भावयतु।



## २८. पितृभक्तिः

१ अवतरणम्, २ पितृभक्तेः करणीयतायां हेतवः, ३ पित्राज्ञाया अमीमांस्यता, ४ उपसंहारः ।

१—माता च पिता च पितरौ, तयोर्भक्तिः पितृभक्तिरित्याख्यायते, सर्वैरपि प्राणभृद्भिः पित्रोर्भक्तिराचरणीया । एष हि जातमात्रस्य मनुष्यस्य धर्मो यदसौ पित्रोर्भक्तिं विदधीत, पितरौ हि सन्ततेर्जननपालनप्रभृतौ यं प्रभूतं क्लेशं सहन्ते तं ध्यायता तथा विधातुमुचितं यथा तौ सन्तुष्येताम् । अत्रार्थे भगवान्मनुः—

'यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ॥'

तयोर्भक्तिश्च तदाज्ञानुवर्तनेन यथा विधातुं शक्यते न तथा प्रकारान्तरेण, अस्माकं शास्त्राणि हि पितरं परमात्मानं मातरं च विश्वेश्वरीं गाहयन्ति तयोर्भक्तेरावश्यकतां समुद्घोषयन्ति । न केवलं शास्त्रमात्रशामत्रार्थे निबन्धः, परं लोकवृत्तमनुवर्तमानानां युक्तिविदामप्ययमस्ति भावः—पित्रोर्भक्तेरनुष्ठाने मनोवैज्ञानिकप्रकारेण जायमानस्य लाभस्यानुपेक्षणीयत्वात् । तथाहि पित्रोरन्तरङ्गाणि स्वरेतोनिर्मिते पुत्रे कयतांशेन वर्त्तमानानि मन्यन्ते विचारकाः, पुत्रेण हि पित्रोराज्ञायां पालितायां जायमाने तदन्तस्तोषे तदंशभूते पुत्रान्तरङ्गेऽपि प्रीतेः, प्रसादस्य चोदयसम्भवात् ।

२—नास्ति नामात्र संसारे कोपि तादृशो यः पित्रोरपेक्षयाऽस्मास्वधिकं स्निह्येत् ( यदि स्निह्यति, मन्यतां वञ्चयिष्यति ) तौ हि स्वभावतः शुभचिन्तकौ, क्लेशमविगणय्य पालकौ, तयोर्हि मनोगताः पुत्रविषयकशुभभावनास्समुद्रतटप्रसृतवालुकाराशिवदसङ्ख्याः । तौ यावदुपकुरुतस्तावतः प्रत्युपकारस्य शक्तिः प्रायः पुत्रे न सम्भवति । पितरौ हि नो जनयन्ति, भोजयन्ति, वस्त्रादिना वृण्वन्ति, शिक्षयन्ति, केन लोभेन व्यापार्यमाणयोस्तयोरमूषु क्रियासु प्रवृत्तिः ? केवलं

पुत्रस्य शुभोदर्कतामभिलष्यैव तौ तथाऽऽचरतः। तौ ह्यनुक्षणं सन्ततीनां सुखसम्पदमेव चिन्तयतः, न तयोः कृते कोपि जगति परः प्रमोदोऽधिकः स्वपुत्रप्रसन्नतायाः प्रमितेः। पितरौ हि स्वस्य तनयस्य सम्मा स्वं सम्मानमेव कृतं समर्थयन्त इति प्रत्यक्षं चक्षुष्मताम्। अत एव पित्रोर्भक्तौ क्रियमाणायां कियतांशेन प्रत्युपकृतमिव भवति, ऋणनिष्क्रय मिव विहितं भवति, स्वशिरसि धृतो भारविशेष इव लघूकृतो भवती मनसिकृत्य जनुष्मतामनुष्ठेया पितृभक्तिः।

३—कोऽपि पितृभक्तिशाली पुत्रः पित्रोराज्ञायाः कर्त्तव्याकर्त्तव्य न चिन्तयेत् तथा कुर्वन् हि पुत्रः स्वस्य पितुश्च बुद्धिमत्तरत्वमिव परी क्षितुं प्रवर्त्तते न चेदमुचितम्, अतः पित्रोराज्ञा यथा वेदाज्ञा तथा मीम सनीयतां नार्हति। अस्यामेव परिस्थितौ परशुरामः पित्रादिष्टो जनन रेणुकायाः शिरोऽच्छिनत्, न चेदृश्या आज्ञायाः क्रूरतरा कापि सम्भ स्याज्ञा। भगवान् रामचन्द्रोपि पितुराज्ञाया अनुवर्त्तनं विना हेतुप्रश्नमे चक्रेऽत एव चाद्यावधि तच्चरितमादर्शतया मन्वते मनुजाः। आस पौराणिकेतिवृत्तानि, ईश्वरचन्द्रविद्यासागरमहोदयो निजमात्रा गृहम गन्तुमाज्ञप्तो जीविकासाधनं कैङ्कर्यं विमुच्य मध्येमार्गं कूलमतिक्रम वहमानां समुपजातजलप्राचुर्यां मकरादिसङ्कुलामपि दामोदरनदीं बा ह्यामतरत्। नेयमतिप्रत्ना कथा। नैतावदेव, अन्येपि महापुरुषाः, येष मितिहासेनेयं मानवजातिगौरवशालिनी (यथा-वाशिंगटन, नेपोलिय अलेक्जाण्डरमहान् प्रभृतयो महापुरुषाः) सर्वेपि पित्रोराज्ञामनुवर्त्त स्म। एषां विषये विशिष्य जिज्ञासमानैरितिहासस्य तानि पृष्ठानि पठनी यानि यत्र्वमीषां जीवनस्य ता भक्तिघटनाश्चित्रताः।

४—अतो महत्त्वं कामयमानैः, स्वसन्ततीनां जीवनस्यादर्शं व्य स्थापयितुमभिलष्यद्भिः, क्रमेणानेन समाजमुन्निनीषद्भिश्च पितृभक्तिर चरणीया। जन्मग्रहणं न केवलं हि कीटपशुवदुच्छ्वस्य मरणाय मनुष्य णाम्। 'जायतां जनकयोर्भक्तिर्जगति समेषु' इति।

---

## २९. अतिथि-सेवा

१–परिचयः, २ अतिथिसेवाया धार्मिककर्त्तव्यरूपता, ३ आधुनिक–'पार्टी'–
वतिथिसेवाभावनाया अभावः, ४ वास्तविकी अतिथिसेवा तदुदाहरणञ्च,
उपसंहारः।

१—स्वपरिवारपृथग्भूतस्य कस्यापि व्यक्तिविशेषस्याकस्मिके पूर्व-
वगतेऽपि वा समागमने तदुचितस्वागत-भोजनन-वासादिप्रबन्धवि-
मतिथिसेवा नाम। इयं च मानवानां हि दैनिककृत्येषु गण्यते
मेधिनां कर्त्तव्येषु सन्ध्यावन्दनपूजाबलिवैश्वदेवादिभिरेव सहातिथि-
ा हि समुपदिश्यते तदधिकृतेन शास्त्रेण। न चात्र यथेच्छा प्रवृत्तिरा-
यते शास्त्रकृद्भिः, गृहमेधपदेन प्राधान्येनास्यैव कर्मणः सङ्केतितत्वात्,
या वैमुख्यं हि—महतः सामाजिकसेतुरक्षकस्य धार्मिकस्य च कर्त्त-
स्य त्यागरूपतयाऽमर्षणीयमागः।

२—इयमतिथिसेवा च धार्मिककर्त्तव्यता मनुष्याणां करणीये-
यतमा, इमामुपासीनस्य पुंसा यदा कदाचिदुपस्थिताय स्वातिथये
ाशक्ति तदुपयोगिसुखसामग्रीसमुपस्थापनं कर्त्तव्यम्, अस्मिन् हि
र्मणि शुद्धा धार्मिकी भावना यदि प्रयोजिका तिष्ठति तदेदं साध्वनुतिष्ठतं
ाति। लोको हि स्वधनिकत्वप्रख्यापनाय समाजे स्वं गौरवं व्यव-
यतं विधाय कस्मैचिल्लाभाय स्वकृतपूजाजपादिप्रसिद्धये वा महदपि
ष्टं बहुमपि च व्ययं सोढ्वापि महतो महतो निजजातीयान् जनसमूहान्
ह्मणवर्गान् अधिकारिनिवहान् वा मिष्टमिष्टं च भोजयति, न च पश्चात्त-
त परं कस्मिंश्चिदपरिचिते रात्रिमात्रस्य कृते वासमात्रं मुष्टिमेयं भोज्य-
न्नं याऽर्थयमानेऽतिथौ समुपस्थिते वागेव क्वचन लीयते, बुद्धिरेव पला-
ते, श्रोत्रेन्द्रियमेवाथवा विपद्यते। न चेदमुचितम्, अतिथिसेवा हि दयया,
तिकतया, नम्रतया च प्रवर्त्त्यते, न सम्पद्गौरवेण लोके विक्रमप्रदर्शन-
मीहया वा।

३—आधुनिकेषु हि 'पार्टी' प्रभृतिभोजयसमारोहेषु नास्याः सेवा-

भावनायाः समादरो दृश्यते, तत्र हि कस्यापि राजनीतिकोद्देश्यस्य प्रच्छन्नस्य लोभविशेषस्य भावान्तरस्य वा मनोनिष्ठमालिन्यव्यञ्जकस्य निभृतं निलीय वर्तमानत्वात् । अत एव चेदृशेषु समारोहेषु सम्मिलितवतामपि कापि सहानुभूतिः सह तदनुष्ठातृमहोदयेन जायत इत्यर्थं विप्रतिपद्यन्ते विबुधाः ।

४—पुरा हि भारते, ग्रीकदेशे, देशान्तरेषु वा यत्र तत्र महानस्य अतिथिसेवायाः प्रसार आसीत्, अतिथयो हि स्नेहेन सदक्रियन्त अभोज्यन्त, अध्यवास्यन्त, अन्वध्यायन्त च । सति स्थितिविशे स्वजीवनं संशये निपात्यापि समायातस्यातिथेः सेवा क्रियमा दृश्यत इतिहासेषु । कतिचिद्दिनान्युपोष्य पारणां कर्त्तुं प्रवर्त्तम एव युधिष्ठिरे कोप्यतिथिरायातस्तत्पारणापदार्थस्य भागमेकमयाच युधिष्ठिरश्च सर्वमपि तं तस्मै समर्प्य तदपि दिनमुपवसति स्मेति पुराणा प्रतिपादयन्ति, नैतावदेव, स्वतनोरपि मांसमुत्कृत्य दत्तवन्तोपि मा मनसोऽस्माकं श्रवणयोर्गोचरतां गताः । को नाम भारतीयो महावीर कर्णस्य नाम न कर्णकुहरे कृतवान् स्याद्येन प्रच्छन्नरूपायातिथितया स पागतायेन्द्राय जीवनव्यापत्तिकरप्रदाने अपि कवचकुण्डले प्रदायि ताम् । अन्यान्यपि सम्भवन्त्युदाहरणानि निर्देशसहानि ।

५—एतावताऽतिथिसेवा गृहस्थानामश्यकर्त्तव्यतया समर्थि शास्त्राण्यपि धर्ममिममनुमोदयन्ति, तथा च—

'अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता' इति ।

अन्यच्च—'उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः' ।

न केवलं शास्त्रानुवर्त्तिभिरेव, लोकसङ्ग्रहकामनाशालिभिः सामाजिक स्थितिसमुन्नतिप्रार्थिभिरपि समादरणीयोऽयमतिथिसेवाभिवा धर्मः ।

---

# ३०. उद्योगः

अथवा

## नास्त्युद्यमसमो बन्धुः

अथवा

## उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः

१ अवतरणम् , २ परिभाषादिः, ३ दृष्टान्तः, ४ उपसंहारः ।

१—इह संसारे यावन्तः प्राणिनः सन्ति, सर्वेष्वपि तेषु शुभाभिलाषः
या प्रयोजितो वर्तत एवेति निश्चितम् । न चैतावतैव ते सर्वे शुभ-
मतमधिगच्छन्ति, केवलस्याभिलाषस्य फलं प्रति जनकताया
ोकारात् । एवञ्चाभिलाषे सत्यपि यं विना शुभं न सिद्ध्यति स
दार्थः ? इति जाते प्रश्ने 'उद्योगः' इत्युत्तरं बोध्यम्, तदभावश्चा-
रूपः सकलाभीष्टप्रतिबन्धकर इति फलति, उच्यते; चार्थद्वयम-
मद्यो निर्दिश्यमानेन श्लोकेन—

'आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति' ॥

२—उद्योगो हि नाम स्वाभिलषितार्थप्राप्तये दृढेन सङ्कल्पेन बाधा-
णितां कृत्वा प्रवृत्तिः, अयमेव चोद्योगः सेवमानः कष्टपरम्परां न
यति, 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति ध्यायन् प्रवर्त्तते
सर्वं तत्र, तथाहि कोपि वाणिज्यव्यवसायी देशाद्देशान्तरं पर्यटन्
त्रायां नानाविधानि कष्टानि भुङ्क्ते, कृषीबलश्च मृत्स्नां म्रदयति,
ति, स्वहृदयरुधिरकणैरिव पृषतैः पयसां सिञ्चति, विद्यार्थी च
श्रिज् ज्ञानसम्पादनाय निशं दिवा करोति दिनं च नयने अश्रेपु
ासज्य नयति, सर्वापि चैतादृशी चेष्टोद्योग इति श्रेणीमाश्रयति ।

ऐहलौकिके, पारलौकिके, आधिभौतिके, आधिदैविके, आध्यात्मिके

वा कुत्रापि कर्मणि विनोद्योगं साफल्यं न सम्भवति, अत एव चाहु-रभियुक्ताः—

'इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते'
'नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः' इति च।

एवं सत्यपि ये मूढधियः प्रमादालस्यनिहता दैवे भारमारोप्य सि-द्धिदातुरुद्योगात् पराङ्मुखा इव भवन्ति ते कदापि सिद्धिं नानुभवन्ति, किञ्च दैवं पुरुषकारेण विना न सिद्ध्यति साधितमिदमेभिः श्लोकैः—

'न दैवमिति सञ्चिन्त्य त्यजेदुद्योगमात्मनः।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति'॥
'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते।
तस्मात् पुरुषकारेण विना दैवं न सिद्ध्यति'॥

न केवलं प्रमाणप्राचुर्यं पश्यद्भिरेव, किन्तु निपुणं विभावयद्भिर-महत्त्वमुद्योगस्य माननीयं, प्रत्यक्षफलप्रदत्वात्, तथाहि दृश्यते य-सदुद्योगवर्त्म समाश्रयति स सुखमश्नुते यश्चेतरथा वर्त्तते स न समृ-द्धिमधिगच्छति। स्वकर्त्तव्यानुसरणं हि जगति प्रकृते नियम इ-दृश्यते, तथाहि सूर्याचन्द्रमसौ समये समुदयेते दुरवगाहं व्यो-समयानुसारेण सञ्चरतः पूर्वतो निश्चिते समयेऽस्तमयेते च-सरितः सततं स्यन्दन्ते, शारीराश्च वायवो यथानियोगं स्वकृत्यानुष्ठाने व्यापृतास्तिष्ठन्ति।

३—अस्यैवोद्योगस्य समाश्रयणेन निःस्वो लक्ष्मीभाजनतां, मूर्खो विद्यावैभवं, जन्मना दस्युर्ब्रह्मवित्तरताम्, अशेषदोषदुष्टश्च गुणगण-शालितां प्रपद्यते, तथाहि 'टाटा'-'फोर्ड'-'सिङ्गर'-प्रभृतीनामुत्पादक-संस्थानां प्रतिष्ठापकाः प्रागप्यधुनेव धनिका नासन्, वोपदेवः प्रचण्ड-मूर्खो भूत्वापि सततोद्योगेन वैदुषीमवाप्य व्याकरणस्य प्रस्थानभेद-मेकमरचयत्, महात्मा वाल्मीकिश्च पूर्वं दस्युभावं भजन्नपि सप्तर्षि-कृतोपदेशानुसारेणोद्योगमास्थाय प्रथमां गणनामवापत्। एवमेवान्य-त्रापि क्षेत्रेषूदाहर्तुं शक्यते

४—अतः सर्वास्वप्यवस्थासु यथाबलमुद्योगः करणीयः, तेन हि मनसि बलमायाति, चिन्ताया अवसरो नोपतिष्ठते, सिद्धौ जातायां नैतिकी तां मन्यमानस्य लोकस्य द्वेषो नोदयते, स्वस्य च तुष्टिरुद्भवति ।

## ३१. सञ्चयी नावसीदति

१. परिभाषा, २ प्रकारोलाभश्च, ३ उपसंहारः ।

१—उपार्जितानामर्थानामंशविशेषस्य स्थिरतया रक्षणं सञ्चयः कथ्यतेऽर्थार्जनो यावदुपार्जयत्ततः किमपि धनं शेषयित्वा सत्यामावश्यकतायां व्ययार्थं यद्रक्षति, स सञ्चय इत्युच्यते । धर्मशास्त्रकारैरपि विपदर्थमुपार्जितवित्तस्य चतुर्थं भागमवशेषयेदित्युक्तम्—'विपदर्थं धनं रक्षेत्' इति । गृहस्थानामावश्यकतमकर्त्तव्ये सञ्चयोऽयमतिप्राधान्येनोल्लेखमर्हति, अन्तरा च सञ्चयं संसारयात्रा विपत्सहस्रसङ्कुला सम्पद्यते । यस्य यावानायः स तावन्तमर्थराशिं यदि व्यये नियोजयति, तदा पुत्रकलत्रादिपरिवृतस्य तस्य कदाचिद्विधिवशाज्जाते दुर्भिक्षे प्रियाः प्राणाः कथमेव रक्ष्येरन् ? विपदन्धतमसे सर्वतः प्रसृमरे विना विभवप्रदीपं कः पुनः पुरः पन्थानं प्रदर्शयेत् ?

२—यस्य यावानायः स तत एव किमपि शेषयितुं प्रयस्येत् । यदि पञ्चविंशती रूप्यकाणि प्रतिमासमायो भवतस्तदा भवान् रूप्यद्वयं रूप्यकमेकमेव वा तथा परिस्थितिं शेषयितुं प्रयतेत, तावन्तं शेषणीयं भागं च सामान्यस्थितौ हरनिर्माल्यमिवानुपादेयं मन्येत । अत्र हि कर्मणि यादृशी सत्यसन्धताऽऽवश्यकी, न तथा परत्र कुत्रापि । स्वेनार्जिते वित्ते सर्वथा स्वमधिकारं दृष्ट्वा तदुपभोगाय लोलुपतया प्रवर्त्तमानस्य मनसो निरोधो नात्यन्तसुकरः, तत्र हि महतस्त्यागस्यापेक्षा भवति ।

किञ्च सञ्चयस्य विशिष्योपकारकत्वं प्रत्यपि क्रियतां दृक्पातः, यदि सञ्चयः क्रियते चिरकालिके रोगे धृतखट्वस्य तदुपार्जकस्य

बान्धवास्तदीयेनैव द्रव्येण तस्य सर्वविधां सहायतामाचरन्ति, चिकित्सका अपि समुचितं मूल्यमादायोपयुक्तमौषधं ददति, इतरथा तु न बान्धवाः कुशलमपि पृच्छन्ति, न वा चिकित्सकास्तदौषधं प्रयुञ्जते। अपि च समाजे न केवलेन सन्ध्ययोरुभयोरपि तण्डुलसेटकस्य पाकेन जीव्यते जनेन, किन्तु यथोयोग्यसामाजिकसम्मानमपि प्रार्थयन्ते प्राणाः, अन्तरेण च द्रव्यसञ्चयमिह भौतिके युगे सम्मानावाप्तिरसंभवेति मन्यते मननानुरागिणः। एतत्तु प्रतिद्वारं प्रतिगृहं प्रतियन्ति लोका यद् द्रव्यमिह नितान्त प्रयोजनीयं वस्तु, दृश्यतां प्रायो हि लोकाः पितरः सन्तो निजेभ्यः प्राणेभ्योऽपि तनयादिषु ममतामधिकां पुष्यन्ति, तेषां च रक्षणावेक्षणशिक्षणादिषु प्रतिपदं द्रव्यमपेक्ष्यते। न च शक्नुवन्ति निःस्वा भौतिकवादाभ्युदयचाकचिक्यशालिनि वर्तमानकालिके प्रतिपदानुभूयमानद्रव्यमहत्त्वे प्रपञ्चे स्वां सन्ततिं योग्यशिक्षासम्पन्नां विधातुम्। किमितोऽपि किमपि कष्टकरम्? एतावतैव न समाप्नोति सञ्चयस्योपयोगिता, ऐहिकामुष्मिकपुण्यसङ्ग्रहार्थमपि सञ्चयोऽपेक्षितः पूजाघण्टाया अपि द्रव्याधीनलाभत्वात्।

न केवलमर्थेनैव सञ्चितेन साफल्यं जीवनस्य, किन्तु यदपि वस्तुजातं तृणादारभ्य मणिपर्यन्तं सर्वस्यापि सञ्चयः, करणीयः, समयेऽल्पस्यापि वस्तुनो दुर्लभताया दर्शनात्।

३—सञ्चयपरेण हि पुंसा रक्ष्यमाणेषु सर्वेषु वस्तुषु यथोपयोगं व्यवह्रियते, तदवसरे च य आह्लादोऽनुभूयते न स शक्यतेऽतथाशीलेन जातु समनुभवितुम्। अतः सर्वैरपि जीवनोत्तरार्द्धे, विपदुपनिपाते, सन्ततिरक्षावेक्षणशिक्षणादौ चावश्यापेक्षिष्यमाणस्य द्रव्यस्य तदार्थान्तरस्य च व्यवहारापेक्षितस्य सञ्चयोऽवश्यमेव कर्त्तव्यः तथा कुर्वाणा हि सततं नन्दन्ति, अत एव चाहुः—'सञ्चयी नावसीदती'ति।

---

# वर्णनात्मकाः प्रबन्धाः

[ सम्प्रति यावदेकत्रिंशत् प्रबन्धा लिखितास्तेषां श्रेणीनिर्धारणं प्रथमपल्लवो-
क्तलक्षणसङ्गमेन विधेयम्, ते केवलं विद्यार्थिनां बुद्धिवैशद्यमाधातुमेव लिखिता
अत एव च तेषां कायोऽपि लघुतम एव स्थापितः, इतः केवलवर्णनात्मकाः
प्रबन्धाः सन्निवेश्यन्ते, एतेषां प्रबन्धानां परिशीलनेन विद्यार्थिनां वर्णनात्मक-
साहित्यमर्यादाद्योतकप्रबन्धलेखे शक्तिरुद्भवेत् । ईदृशप्रबन्धलेखे उपशीर्षकसन्नि-
वेशनं नावश्यकं, न वा केवलवृत्तकीर्त्तनेन कृतकृत्यता, कवित्वप्रचुरभाषाभाव-
सन्दर्भणसम्भवकीर्त्तिलिप्साया एवैतादृशप्रबन्धलेखे प्रवर्त्तकत्वात् । अतोऽत्र विषये
कृतभाषाप्रयोगाभ्यासास्समासादितसाहित्यसेवावसराः सरसचक्षुष एव सफलता-
मासादयेयुरिति विद्यार्थिनामत्र सिद्धयेऽध्यापकमहाशयैर्यथासम्भवं प्रागुक्तनिय-
मोपनियमादिषु सावधानता, सुदृढोऽभ्यासश्च विद्यार्थिभिराश्रीयेत इत्यत्र
यतनीयम् । ]

## १. तीर्थयात्रा

यदाऽहमवकाशे गृहं गच्छामि तदा मम माता तीर्थयात्राभिलाषं
प्रकाशयतीति वर्त्तमानवर्षीयपूजावकाशे तदाशयमनुरुध्य मया तया सह
तीर्थयात्रार्थं प्रस्थितम् । दशम्यां विजयदशम्युत्सवमवसाय्य तस्यामेव
श्रवणायां यात्रां कृत्वा धूमयानसौविध्येन काशीपुरीमागतावावाम्, तत्र
यथावद् गङ्गास्नानं कृत्वा विश्वनाथस्य दर्शनं कृतम्, यदीयं मन्दिरं
स्वर्णमयेन कलशेन रजतमयेनाधारपात्रेण विशालरम्यया नेपालमहीपाल-
प्रदत्तया घण्टया च दर्शकानानन्दयति । तन्मन्दिरसमीप एव स्थितमन्न-
पूर्णामन्दिरं सर्वानपि विश्वासयति यदत्र शिवपुर्यां कस्यापि भोजनचिन्ता-
वशम्या न भवति ।

तदेवं विश्वनाथान्नपूर्णयोर्दर्शनं कृत्वा तत्परिसरवर्त्तिनां मन्दिराणां
देवानप्याराध्य सुदूरस्थितयोर्लोलार्ककेशवयोर्दर्शनंकृत्वा तत्र पुरि दिनत्रय-
मुषित्वा सर्वथा दूरीकृतान्तर्मलाविव प्रसन्नहृदयावावां तानि तानि सार-
नाथ-बौद्धमन्दिर-भारतमातृमन्दिर-वाराणसेयसंस्कृतविश्वविद्यालय-काशी-

हिन्दूविश्वविद्यालयादीनि द्रष्टव्यस्थलानि दृष्ट्वा प्रयागाय प्रस्थितौ, यत्र गङ्गायमुनयोः सङ्गमे स्नास्यतां स्नातवतां स्नाताञ्च जनानां समवायं नरमस्तकसभावत्प्रतीयतेस्म ।

तत्र गत्वा कृतवपवनावावां यथाविधि स्नात्वाऽऽह्निककृत्यं निर्वर्त्य च अक्षयवटस्य समीपमागत्य तदीयच्छायामुपजीव्य च विगतश्रान्ता विवाभूव । तत्र दिनद्वयं स्थित्वा तानि तानि द्रष्टव्यस्थानानि समालोक्य च ततो वक्रेणापि पथाऽयोध्यां नाम पुरीं प्रापाव, यत्र प्रशान्तरावतप्रवाह सरयूः स्वप्रवाहध्वनिमधुरिम्णा मर्यादापुरुषोत्तमस्य रामचन्द्रस्य कथा सिवावास्यामाख्यत् । तत्र सरयूस्नानरामादिदेवगणदर्शनाभ्यां साधुसंगे चात्मानं विनोद्य च पुरः प्रस्थितयोरावयोः सौभाग्येन यात्रिणा केनचित् सङ्गो जातो यदनुरोधादावाम् 'निमसर'नामके स्थाने यानं विहाय नैमिषारण्यं नाम भारतीयसंस्कृतिसमनुस्यूतं तीर्थं प्राप्तौ, तत्र 'गोरखटिला' नामकं तपस्विनिवासस्थानं दैवीसम्पद्ब्रह्मचर्याश्रमनामकं च विद्याभवनं नितान्तमाकर्षणमसृजताम् ।

ततश्च 'लुक्सर-Junction' नामक स्थानमासाद्य तद्वर्त्मना कुरुक्षेत्रमागतवन्तौ यत्र भारतं नाम विश्वविदितं युद्धं जातं यस्मिन् न केवलं भारतस्य जनहानिर्धनहानिर्वा जाता, किन्तु भारतस्य स्थितिरेव विपर्यं गता । तत्रत्या लोका इदमप्यबोधयन्यदत्रैव परशुरामोऽपि क्षत्रियरुधिरमये पयसि सन्ध्यां कृत्वा स्वताताय जलाञ्जलिं च दत्त्वा कोपपावकं स निरवापयत् ।

यद्यपि दश दिनानि प्रवासिनोरावयोर्व्यतीतानि परं नित्यनूतनस्थान दिदृक्षया देवाराधनसमीहया पुण्यनदीस्नानलालसया चावयोर्मनसी मनागपि पथि क्लेशं नान्वभूताम् ।

अथ वयं मथुरायायिनमध्वानमाश्रित्य यदा मथुरासमीपमायाता-स्तदा सयात्रिकेषु कश्चन गोविन्द-दामोदर-माधवेति गृणन्तं कञ्चन चापरं—'यस्यामास विलासलालसवती कुब्जा समाब्जापतेः सैवेयं मथुरापुरी नयनयोः सीमानमारोहती'ति सानन्दमुच्चारयन्तं

कञ्चन च भक्तिरसाप्लुतचेतसं निर्निमेषया दृशा तामीक्षमाणं दृष्ट्वा परमानन्दः समजनि ।

अवरुह्य यानाद्यमुनां सूर्यतनयामवगाह्य च कृतश्रीकृष्णदर्शनावावां यं प्रसादमनुभूतवन्तौ न स केनापि वचसा प्रकाशयितुं शक्यः ।

अवस्थाय तत्र कियन्ति वासराणि वृन्दावनं गतावावां तत्र स्थितानां महात्मनां संसर्गेण, तेषां तेषां व्रजचन्द्रलीलासाक्षिणां कुञ्जानां दर्शनेन, कीर्त्तनसमारोहेषु भागग्रहणेन, कथापुराणादिसमाकर्णनेन च गतान्यहानि नालक्षयाव ।

ततश्च चिरं प्रवासमनीहमानाभ्यामावाभ्यां सत्यपि मनोबन्धे बलादिव ततः पुण्यधाम्नः प्रस्थाय गृहाभिमुखः पन्थाः समाश्रीयत, अचिन्त्यत च सत्यं तीर्थयात्रा अस्नाना शुद्धिः, अपाना पिपासाशान्तिः, अभोजना तृप्तिश्चेति ।

यावदावां गृहमागतौ तावदासीदतिस्म भ्रातृद्वितीयेति । सर्वथा स्मरणीयमिमं यात्रावृत्तान्तं स्वभगिन्यै निवेदयितुमहं तद्ग्रामाभिमुखं चलितः ।



## २. नौकाविहारः

यदाहं वाराणसेयहिन्दूविश्वविद्यालयस्य च्छात्र आसं तदा समानवयोभिः सहाध्यायिभिः सह नौकाविहाराय चलितुं निश्चित्यैकस्यां ग्रीष्मर्त्तोः सन्ध्यायां पञ्चषैर्मित्रैः सह प्रास्थिषि । 'असी'घट्टमागत्य नावं स्थिरीकृत्य च तया यथाप्रवाहं चलितेष्वस्मासु सम्मुखमागच्छन्मन्दो वायुः समस्तमेव तापमपासयति स्म । तत्र स्थितैरस्माभिरकृतेऽपि चालनव्यापारे जलवेगद्वारा स्वत एव मन्दमन्दं चलन्त्या नावा यथा यथाऽग्रेतनानि स्थानान्यासाद्यन्त तथा तथा तच्छोभासम्पदालोकनकृतार्थीकृतलोचनैरस्माभिरागमिष्यद्वस्तुशोभादर्शनबद्धोत्कण्ठैरभूयत ।

यदा नौः किञ्चिदग्रेऽगच्छत्तदा तेषु तेषु दशाश्वमेधादिनाम्ना प्रसिद्धेषु स्थानेषु दृष्टिः पतिताः यत्र केचित्स्नानमाचरन्ति, केचित्पूजाम् कुर्वन्ति, कुत्रचिद् बद्धसङ्घाः स्त्रियो गायन्ति भक्तिगीतानि, कुत्रचिदन्योन्यमिलितमुखाः किमपि रहस्यमालपन्ति, क्वचिद् विद्यार्थिनिवहोऽध्यापकानामध्यापनपद्धतिमालोचयति, कुत्रचिच्च व्यापारिनिवहो व्यापारविषयां वार्तां प्रसारयति, क्वचन साधवो निमीलिताक्षा ध्यायन्ति शाश्वतं पुरुषं पुराणम्, ज्ञानिनो ज्ञानसन्तानमायामयन्ति, क्वचिच्चापणिकास्तानि तानि वस्तूनि विक्रीय प्रभूतं धनमर्जयन्ति, अपरत्र कस्याश्चन सभाया आयोजनं भवति।

नावि जले प्रसरन्त्यां तटस्थितानां दृष्टिस्तथैव पतति यथा ते नावमारोढुमिव तामुपसर्तुमाकारयन्तः स्युः, नावि स्थितानां दृष्टिस्तु तटेषु तथा पतति यथा ते विमुच्येव कोलाहलकठोरां भुवं तरलं जलतलमागतास्ततोऽपरक्ता इव स्युः।

कियद्दूरमपसृतायां नावि जातायां सन्ध्यायाम्, अवतीर्णे भगवति भास्करे पश्चिमोदधिम्, क्रमशः प्रकाशीभवत्सु नक्षत्रेषु, तटभूमयः सकृदेव प्रज्वलितप्रदीपाः सत्यस्तथा प्रकाशिता जाता यथा व्यस्मार्यतेव भगवान्सूर्यः। तस्मिन्समये सर्वत्र प्रसरन्ती प्रदीपप्रभा गङ्गाजले प्रतिफलन्ती गङ्गायै दीपमालामिवोपहरति स्म।

स्मरणोपनीतरवितापापनोदायेव सातिशयं शशाङ्कमीक्षमाणानामस्माकमैकमत्येन विचारो निश्चयत्वं गतो यदीदृशे प्रमोदावहे समयेऽस्माभिरपि यथाऽभिलषितं गीतसुखमास्वादनीयम्। तदनुसारेणास्मास्वन्यतमो रमानन्दो नित्यसहचरं वाद्ययन्त्रं क्रोडे कृत्वा यदा कलगम्भीरस्वरेण गातुमारभत, तदा सत्यं तद्गानमाधुर्यहृतहृदयानामस्माकमन्तःकरणानि लोकान्तरगतमिवानन्दमन्वभवन्। तदीयगीतलहरी गङ्गालहरीषु नृत्यन्तीव प्रतीयमाना कामप्यपूर्वां तृप्तिमसृजत्। गानमाधुर्यहृतहृदयाञ्चेतनाप्यस्माकं तरणिर्मन्थरगमनेवाजायत।

कियद्दूरमेवमतिक्रामात सति समये जाते गीतावसाने वयं किमपि सामवायिकं क्रीडनकमारचयितुमिच्छन्तः 'ताश'क्रीडां प्रवर्त्तितवन्तो यत्र चालकमतिरिच्य समेऽपि वयं भागं गृहीतवन्तः। प्रथमं सा क्रीडा मन्दोत्साहप्रवृत्तापि जाते कस्यापि दलस्य पराजये क्रमश उत्साहवृद्धौ जायमानायां महतोत्साहेन प्रावर्त्तत, यत्र वाह्य-जगतोऽखिलोऽपि व्यापारकलापो निलीयेव स्थितः प्रतीयते स्म। एवं समतिक्रान्ते वह्नौ समये यदास्माकं नौर्वेणीमाधवघट्टोपपरिसरं प्राप्ता तदाऽस्मास्वधिकानुभविनो गोपीनाथस्यानुरोधेन सा क्रीडा समाप्तिमनीयत।

समाप्य तां क्रीडां यदा वयमथितटं दृष्टिं निक्षिप्तवन्तस्तदा तत्र तटे क्वचिद् भागवती कथा प्रस्तुता, क्वचित्तुलसीदासीयरामायणीया च, क्वचिद् विद्वद्गोष्ठी प्रवर्त्तमाना यत्र तत्त्वनिश्चयापेक्षया स्वज्ञान-वत्तरताप्रचिकाशयिषैवाधिका प्रतीयते स्म। क्वचिच्च कस्यापि दण्डिस्वामिनो व्याख्यानं निरर्गलभावेन जायमानमधीक्ष्यते स्म, यत्र शास्त्रीयतत्त्वान्यनुभवाधारेण प्रकाशीकृतानि मन्यते स्म।

ततश्चाग्रे सरन्त्यां नावि वयं सहयायिनीषु नौषु यदा दृष्टीरक्षिपाम तदाऽपश्याम क्वापि नावि समस्तकाशीपुरीदिदृक्षोत्तानचक्षुषो दूरदेशा-गतान् तैर्थिकान् क्वापि चानतिचिरपरिणीतौ दम्पती सहस्वल्पपरिजनौ लज्जामन्थराभ्यामपि प्रेमप्रवणाभ्याम्, पीतरूपसुधाभ्यामपि सतृष्णाभ्यां नयनाभ्यां परस्परमालोकयन्तौ, क्वापि कनीयांसं बालं लालयन्तं यवी, यांसं स्वं सुतमीक्षमाणौ प्रमोदपूर्णान्तिरङ्गौ प्रौढदम्पती, क्वचन चापरत्र नावि काषायं वसानौ धृतरुद्राक्षौ शास्त्ररहस्यं मीमांसमानौ तापसौ, क्वापि च वाणिज्यवृत्तमालोचयन्तौ श्रेष्ठिवरौ।

तदेवं यदास्माकं नौस्तानि तानि स्थानान्यतिक्रम्य राजघट्टस्य समीपमासदत्तदाऽस्माकं नयनानि सेतोर्गङ्गाबद्धस्यावलोकने तथा-

ऽऽसक्तानि बभूवुर्यथा परत्र जायमानानि मनागपि नाध्यायन्।

तत्र हि सेतौ क्वचित्पूर्वतः पश्चिमां पश्चिमातः पूर्वाञ्च गच्छतां तेषां तेषां यानानां चाकचिक्यं चक्षूंषि बलादिवाहरति स्म। लोको याति, यानं याति न च कश्चित्परस्परोपमर्दस्तद्गमनाभ्याम्, एवंविधं विशालं सेतुमीक्षमाणा वयं नावं धारातस्तटाभिमुखं नेतुमादिश्य चालकं यावत्तटावेक्षणे व्याप्रियामहे तावदेव नौः स्वयमेव तटमापत्। तटलग्नायां च तस्यां क्रमशोऽवतीर्णास्ततो वयं चालकाय पारिश्रमिकं तदभिमतं प्रदाय साधुवादैस्तं प्रसाद्य च यदा नगरं प्रविष्टास्तदा स्वं स्वर्गावतीर्णमिव लुप्तप्रसादं प्रतियन्तोऽपि स्वान्तसञ्चितानुभूतानन्दांशानेव मनसि समास्वादयन्तो यथायोग्ययानानि समासाद्य स्वावासस्थानानि प्राप्तवन्तः, कृतयात्रावर्णनाश्च सहायैस्सहाहारकर्मणि समगंस्महि।

तदसौ यात्रावृत्तान्तः सम्प्रत्यपि स्मर्यमाणो मनः पुलकयति, तत्र सङ्गिनां स्मारणेन कमपि भावोद्रेकं जनयति, कालव्यवधानं तिरोधाय च मां तत्र तदवस्थमेम ज्ञानदृष्टौ विधत्ते।



## ३. धूमशकट ( रेल ) यात्रा

एकदा ग्रीष्मावकाशप्रारम्भे सुहृदो रामनाथस्यानुरोधेनाहं तदावासनगरं कानपुरं गन्तुं कृतनिश्चयः स्वगृहसमीपस्थं धूमयानस्थितिस्थानं यथासमयमागत्य तदागमनं प्रतीक्षमाणोऽतिष्ठम्, प्रतिदिनं तद्यानं तत्र सार्धनववादने समायाति, परं तस्मिन्नहनि तद्विलम्बमानमासीत्, क्रीतचिटिकोऽन्तर्यानस्थितिस्थानं कल्पितमासनमासाद्य तत्रोपविष्टः, सहयात्रिकैरालपन् कालमयापम्। जाते समये यानमनागतम् आलोक्य यदा जिज्ञासां प्रकाशितवानहं तदा ज्ञातवान् यदधुना यानं दूरे विद्यते। स हि प्रतीक्षासमयो नितान्तदुर्वहः

तीयते स्म, कदाचित् पुस्तकपत्रादिविक्रेतुर्निकटे, कदाचित्ताम्बूलिकपार्श्वे, कदाचिच्च 'जलकल' समीपेऽवस्थाय गमितेऽपि बहुतरे समये यदा प्रतीक्षाऽसुकरा प्रतीयते स्म, तदानावश्यकमेव प्रश्नचयं पृच्छन् सहयात्रिणां मनांस्युद्वेजयितुं प्रावर्तिषि। एतेन प्रकारेण गमितचतुर्होराऽन्ततो यानमागच्छत्प्रतीत्य भारवाहकशिरसि स्वीयं सामग्रीचयमाधाय यानागमनप्रतीक्षायां बहुभिर्यात्रिभिः सममेकपङ्क्तौ यानागमनदिशि दत्तदृष्टिरतिष्ठम्।

याने समागते तदागमनजनितध्वनिना आरोहदवरोहल्लोनिवहकलकलेन तत्तद्वस्तुविक्रेतृजनकोलाहलशब्देन भारवाहकजनधावनादिना च तत्स्थानं सम्भ्रान्तमिवाजायत। तस्मिन्नेव सम्भ्रमेऽहमपि त्वरया किमप्येकं द्वितीयश्रेणीस्थानमासाद्य वस्तूनि यथास्थानं विन्यस्य भारवाहकायोपयुक्तं पारिश्रमिकं प्रदाय च स्वस्थः सञ्जातः। तदनन्तरं यदा तत्र कोष्ठे समुपविष्टान् सापेक्षदृष्ट्याऽपश्यं तदा कतिचनैव जनानालोक्य ान्तेः श्वासममुञ्चम्।

कातिचित्कला विलम्ब्य चलिते याने क्रमशो वेगमासादयति समागच्छताऽव्याहतेन वायुना चुम्बितसकलावयवस्य मम श्रान्तिरपाक्रियत्व। घटिकार्धमेवमनासक्तभावेन वेगेन धावतो यानस्य समीपमागच्छतो ग्रामादीन् पश्यन् वस्तुतस्तदवधारयितुमशक्नुवन् केवलं द्रष्टृत्वमात्रपात्रतामाकलयन्नाह्लादिततनुश्च यावदात्ममञ्जूषास्थितमेकं पुस्तकमादाय कालमुपयोक्तुमैहिषि, तावत्पार्श्वोपविष्टस्य सज्जनस्य हस्ते एवमेव स्थितं Inside Asia पुस्तकं दृष्ट्वा तस्य सज्जनस्य दिशि यया दृष्ट्याऽपश्यं साऽनक्षरमेव मदाशयं तस्मै न्यवेदयद्यस्मिन् ज्ञातेऽसौ महानुभावः सादरं तत्पुस्तकं मम हस्ते निधायाध्येतुमागृह्य च स्वीयं शिरो यानगवाक्षोपरि निधाय निद्रामिव प्रतीक्षमाणो निमीलितनेत्र असाञ्चक्रे।

अहन्त्वन्धो नयनद्वयमिव तत्पुस्तकमासाद्य रचयितुः 'John Gunther' महोदयस्य नाम च वाचयित्वा तथाऽध्ययने समासक्तो

जातो यथा मुजफ्फरपुर-सोनपुर-छपरा-सिवान-भटनीप्रभृतीनि यान स्थितिस्थानान्यतिक्रम्य देवरियामुपाच्छंति याने प्राभातिकवातकृतशैत्ये मन।गालोडिते वपुषि अवसितबहुभागे जाते च तत्पुस्तके रात्रिजागर क्लान्ताभ्यां नयनाभ्यां यदा करबद्धं घटिकायन्त्रमालोकयं यदा तत्र साधं त्र्ययवादनसमयं प्रमाय किञ्चिदलस इव तत्पुस्तकमेकतो निधाय चक्षुष न्यमीलयं न च तदनन्तरमवागच्छमायातानि गोरखपुर-गोण्डाप्रभृतीनि स्थानानि। यदा चाष्टवादने 'लकड़मण्डी' नामकं स्थानं प्राप्य या व्यलम्बत तदा पुस्तकाधिपतिना कृताभ्यर्थनः सधन्यवादशतं तदी पुस्तकं तस्मै समर्प्य स्थिरीकृतासनोऽ तष्ठम्।

जाते जागरे सहयायिभिरालपन् दैनिकं कृत्यञ्चावसाय्य कृतोचिता हारपरिग्रहो दैनिकपत्रपाठादिनाऽपनीतसमयो यथासमयं 'लखनऊ नामक स्थानमासाद्य तत्र कृतयानपरिवर्त्तनः कानपुरयायिनि या लोकानामाधिक्येऽपि कथञ्चिदासादितस्थानः समुपन्यस्तसमस्तवस्तुभ रश्च यावदासनपरिग्रहं करोमि तावद्विहारयुक्तप्रान्तयोः शासनप्रबन्धसम्य क्त्वासम्यक्त्वविषये विवदमानयोर्द्वयोर्यूनो कथोपकथाया रसमास्वाद यितुं प्रावर्त्तिषि।

तत्र विहारपक्षगतो युवको यावत्स्वपक्षे युक्तीरुद्भावयति तावत्तत्प्रति पक्षी तत्पक्षे दोषानुपन्यस्य स्वपक्षं द्रढयति। तदेवं जायमानेऽपि वाक्क लहे तयोः सौमनस्यपूर्णं ताम्बूलदानादि सौहार्दव्यवहारं दृष्ट्वा ममापि चेतस्तत्र वाग्युद्धे भागं ग्रहीतुमाकुलतां भजति स्म।

यदा चाहं विहारस्य शासनं प्रशंसितुमारब्धवान् तदा समासा दितवल इवासौ प्राक्तनो वक्ता मां चिरपरिचितयेव दृशा विलोक्य मौनं प्रापत्, तत्प्रतिपक्ष्यपि नूतनसहयोगलाभेनेव प्रसन्नमना महतोत्साहेन स्वां पक्षं पोषयितुमयतत। एवं जाते वाक्पाण्डित्य-

काशने श्रान्ताविवावां लब्धपरस्परपरिचयो गन्तव्यस्थानादिप्रश्नक्रमेण समानं गन्तव्यस्थानं प्रतीत्य परं प्रमोदमुपगतवन्तौ।

स हि मम नूतनः सखा रामनाथस्य मातुलपुत्रस्तदनुरोधेनाहमिव तदीयं गृहं गच्छन्नासीत्। असौ नाम्ना प्रमोदो वपुषा प्रमोदितजननयनः वयसा मया समानः स्वाध्यायेन प्राप्तसभ्यजनोचितयोग्यतो यदवधि मित्रत्वेन गृहीतस्तदवधि तु सा यात्रा नितान्तमाह्लाददायिनी समवर्त्तत।

यदेव दृश्यं पुर आयाति तदेवामूलचूलमालोच्यते तदेव वस्तु क्रीत्वा विभज्य भुज्यते यत्पुर उपतिष्ठते, यदेव विवक्ष्यते तदेव सादरं श्रोतुमि-णमवेत्य सानन्दमावेद्यते, तदेवं स समयः प्रमोदपूर्णतया ह्रस्यमान-ान्वभूयत।

आगते च कानपुरे अवरुह्य यानाद्यदा जनसागराद् बिन्दू इवावां बहि-र्गच्छाव, तदैव यानमादायावयोः स्वागतार्थमुपस्थितं रामनाथमा-लोक्य सहैवावां प्रफुल्लितदृशौ जातौ।

रामनाथोऽपि प्राप्तपरस्परपरिचययोरावयोरेकदैव लाभेन सुहृदोः परमानन्दमाप्तवान्। सा चेयं मम यात्रा नितान्तसुखदासीदित्यधुनापि यदा तां स्मरामस्तदाऽऽनन्देन तनूरुहाणि जाग्रतीति।

---

## ४. दीपावली

अस्माकं देशे प्रचलितेषु पर्वसु दीपावली स्वं स्थानं प्रसिद्धं रक्षति। बालानारभ्य वृद्धान् यावत् सकलोऽपि लोकोऽत्र पर्वणि समभावेन समवैति। अयमुत्सवः कतिचिदन्यानप्युत्सवान् क्रोडीकृत्य स्वमायामं तनुते। द्वादश्यां द्वीपवल्याः प्राक्तन्यां गोवत्सपूजा क्रियते यात्र कृषिप्रधाने देशे सर्वथोपयुज्यते। भारतवासिनो गृहाणि न पताकाभिर्न तोरणैर्वा तथा भूष्यन्ते यथा पशुभिः, पशवो हि कृषकाणां

दैनन्दिने उपयोगे सहायकाः सन्त एव तद्गृहाणि भूषयन्त्यतस्तेषां पूजा भारतवासिभिरनादिकालात् क्रियते। अस्मिन् पशुपूजनपर्वणि भारतीयाः स्वान् पशून् स्नपयित्वा तान्नूतनैरलङ्करणप्रग्रहादिभिरलङ्कृत्य तान्नीराजनादिना समर्चयन्ति।

'धनतेरस'नाम्ना प्रसिद्धे दीपावल्यङ्गपर्वणि लोका नूतनानि पात्राणि क्रीणन्ति येषु मधुरादि स्थापयित्वा दीपावलीदिवसे लक्ष्मीः समभ्यर्च्यते।

एभिः पूर्वाङ्गभूतपर्वभिः सह दीपावली समागच्छति या स्वप्रभाभिरुदासीनानामपि मनांसि चमत्करोति। आगतायामेवास्यां धनिकानां भवनेषु मन्दविभवानां गृहेष्वपि चाऽसंख्या दीपाः प्रज्वलन्ति, वाद्यानि वाद्यन्ते, तथा प्रतीयते यथाऽमाया गाढान्धकारं विजेतुमेव लोकोऽयमुद्यतः स्यात्।

दीपावल्यां शक्तेः सरस्वत्याश्च पूजया सह लक्ष्मीपूजा महता समारोहेण सम्पाद्यते। प्रातरारभ्य गृहाणि परिष्क्रियन्ते, परिकराः प्रकामं सज्जीकृता भवन्ति, लोकाः स्वं स्वं सकलमेव वस्तुजातं यथाशक्ति स्वच्छतां सुरक्षां च नेतुं यतन्ते, जाते सायंकाले कृतगृहदेवतादीपदानविधयो नैष्ठिका उल्मुकं भ्रामयन्तो मन्त्रांश्चोच्चारयन्तो निजपितॄन् स्वर्गं गमयितुं तन्मार्गमालोकयन्ति, बालकाश्च विनैव किमप्युद्देश्यं शतमुल्का भ्रामयन्तो मार्गान् चत्वराणि च प्रकाशयन्ति।

दीपावल्याः परतोऽपि बलिप्रतिपदासंज्ञया प्रथितायां प्रतिपदि गोवर्धनपूजाया अपि यत्र तत्र प्रचारो विद्यते। अस्मिन्नेव दिने श्रीकृष्णो गोवर्धनपूजार्थं व्रजवासिनोऽनुरुद्धवान्, व्रजवासिषु तथा ।वत्सु च कुपितादिन्द्राद् व्रजवासिजनतां गोवर्धनोत्थापनद्वारा रक्षितवान्।

दीपावल्या उपक्रमे 'धनतेरस' नामकं पर्व, अवसाने च यमद्वितीया समागच्छति, श्रूयतेऽस्यां तिथौ यमो भगिन्यास्स्वस्या यमुनायाः समीपमागच्छति, तस्यां च तिथौ यमुनायां स्नानं कुर्वन्तो जना यम-

यातनाभयान्मुच्यन्त इति। वस्तुत इमामेव कथामाधारीकृत्य 'भोक्तव्यं भगिनीहस्तात्' इति स्मृतिं चानुरुध्य भ्रातृभगिन्योरानन्दवर्धनोऽयं दिवसो महता समारोहेण सम्पाद्यते, यत्र भगिन्यो भ्रातृन् चन्दन-करणादिनाऽऽहृत्य तान् भोजयन्ति। भ्रातरश्च ता यथाविभवं धनादिना तोषयन्ति।

कायस्थवंशोत्पन्ना इमामेव द्वितीयां चित्रगुप्तद्वितीयानाम्ना व्यवहरन्ति, यत्र ते मसीकठिनीलेखिन्यादिजातीयजीविकाप्रतीक-जातमर्चयन्ति।

केचित्तूत्सवस्यास्य प्रारम्भस्तदैव जातो यदा रामो रावणं निहत्य लङ्कातोऽयोध्यां परावृत्त इति वदन्ति।

अतिविचित्रमिदं संयोगापतितं वस्तु यदत्रैव दीपावल्यां भारतीयजी-वने समाजसंस्कारायावतीर्णा दयानन्दसरस्वतीमहाशयाः धराधाम हित्वा दिवं पलायिताः।

तदयं महोत्सवदिवसो भारतीयसंस्कृतेः कतिपयान्यङ्गान्यन्त-समावेशयतीति भारतीयानां प्राणैः सहास्य शाश्वतः सम्बन्धः सञ्जातोऽस्ति।

क्वचित् क्वचिदत्रावसरे द्यूतक्रीडा प्रवर्त्यते परन्तदज्ञानविलसितम् [illegible]हि पवित्रे पर्वणि लोकैः लोकद्वयविरुद्धं द्यूतं निषेव्य पर्वमहिमा ह्रासं [illegible]मनीयः।

तथा चायमुत्सवदिवसो महत आनन्दस्य दिवसः भारतीयैर्यथा-योग्यतं समाहर्त्तव्यो येन संस्कृतेः सूत्रमक्षुण्णभावेनाग्रेसरत् पुरोभाविनोनां भारतीयजनतानां संस्कृतिं प्राचीनतमां कर्त्तुं शक्नुयात्।

## ५. भारतीयसभ्यता

कस्या अपि जातेः [illegible]गणगणस्य सूचकः क्रिया-

सभा, सभायां साधुः सभ्यस्तस्य भावः सभ्यतेति निरुक्तिरपि जातिगत
गुणगणमेव सभ्यताशब्दाभिधेयं बोधयति ।

सभ्यतासंस्कृत्योर्महदन्तरम्, यदि सभ्यता शरीरं तदा संस्कृति
रात्मा । यथा भ्रान्त्या जनो देहमेवात्मत्वेन प्रतिपद्यते तथैव संस्कृतिर्मा
सभ्यताशब्देनावगच्छन् जनो भ्रान्तः प्रत्येयः । संस्कृतिबोधनाय बौद्धिक
विकासा अन्वेषणीयाः सभ्यताविबोधनाय तु कायिका गुणाः ।

भारतीया सभ्यता परमप्राचीना, वैदिकयुगेऽपि भारतीया सभ्य
आसन्, तस्मिन्नपि युगे भारतीयेषु परकीयगुणादरसामर्थ्यम्, स्वगुण
प्रकाशनसामर्थ्यम्, स्वस्थितसद्गुणद्वारा परोपकारभावनाऽप्यासीत्
भारते तदाऽपि तादृशानि शिल्पानि निरमीयन्त यादृशानां शिल्पान
निर्माणमधुनाऽपि कस्यापि देशस्य गौरवस्य कारणं मन्यते । 'अजन्ता
'सांची' 'महेञ्जोदरो' 'हरप्पा' प्रभृतिस्थानानां पुरातनवस्तुजातान्य
साक्षीणि । यस्मिन् कालेऽन्ये देशा अक्षराणि न जानन्तिस्म; तस्मिन्न
कालेऽत्र देशे भूर्जवज्रवटुप्रभृतिवनस्पतिपत्रेषु सहस्रं ग्रन्था अलि
ख्यन्त । यदाऽन्ये देशाः वस्त्राणां स्थाने चर्माणि वसते, तदाप्य
देशोऽतिस्निग्धकौशेयकानि परिदधातिस्म । यस्मिन् काले परत्र देशे
र्बर्बरता व्यजृम्भत, तदाप्यत्र देशे ज्ञानविज्ञानयोरुन्नत्यै प्रयत्नः क्रिय
माणोऽलक्ष्यत ।

यदि गम्भीरदृष्ट्या विचारः क्रियते तदेत्थं प्रतीयते यद्भारतीय
सभ्यता समये समये देशान्तरीयसभ्यतामपि स्वतनौ निलीयैकीचकार
इयन्तो देवाः सभ्यतान्तरसम्पर्कादेवात्रागताः, इयती विशालदृष्टिता चा
परकीयसभ्यतासम्पर्ककृतैव ।

विलक्षणतमेयं भारतीया सभ्यता । भारतं पूर्वं यदासीत्तदासीत्;
बहोः कालाद् भिन्नजातीनां निवासभूमितया प्रथते, भिन्ना जात
निवसन्त्योऽप्यस्याः सभ्यतां स्वीयसभ्यतया पिधातुं नाशक्नुवन् ।

भारतीया सभ्यता एकतो हूणानां शकानां परेषां च विजाती

विदेशीयानामाक्रमणेषु जातेष्वपि स्वरूपं न जहावपरतश्च तेषां गुणानात्मसाच्चकार।

भारतीया सामाजिकव्यवस्था भारतीयसंस्कृते रक्षायां प्रभूतं भागमग्रहीत्; भारते ब्राह्मणैरिदं कर्त्तव्यं क्षत्रियैरिदमित्थं या व्यवस्थाऽऽसीत्तया प्रेरिता ब्राह्मणा वेदस्याभ्यासपूर्वां रक्षामकृषत, क्षत्रिया देशस्य रक्षामकुर्वन्। एवमेव तास्ता जातयः स्वानि कर्माणि कुर्वन्तः समग्रामपि सभ्यतामक्षुण्णामस्थापयन्।

भारतीयायाः सभ्यतायाः प्रभावोऽयं यत् भाषया जीविकया भोजनादिना च नितान्तं भिन्ना अपि तत्तत्प्रान्तवासिनो मूलसभ्यतायां समाः प्रेक्ष्यन्ते, मद्रासे वसन्तो नेपाळवासिनां मन्त्रानेवोच्चारयन्ति, काश्मीरवासिनां वङ्गवासिनाञ्च सन्ध्यापद्धतिः समा।

अस्या एव च सभ्यतायाः प्रभावेण देशोऽयमेकसूत्रग्रथित इवाखण्डोऽवर्त्तत।

सम्प्रति यद्यपि वेशादौ नानाविध्यं दृश्यते परमन्तरनुस्यूतं सभ्यताबीजं समानमिति नास्ति किमपि सभ्यताविघटनसम्भावनम्।

---

## ६. संस्कृतसंरक्षणोपायाः

अस्माकमयं देशः संस्कृतभाषाया उत्पत्तिस्थानं वृद्धिस्थानं चेति न तिरोहितं संस्कृतस्य विषये किञ्चिदपि जानतां कृते। तस्य देशस्य जीवनमेव संकृतभाषायां निहितमित्युक्तिरपि नात्युक्तिदोषदुष्टा। पूर्वकालेऽत्र संस्कृतभाषयैव सर्वं कार्यं क्रियतेस्म सर्वेऽपि व्यवहाराः संस्कृतभाषयैव सम्पाद्यन्तेस्म। आस्तां सुदूरपूर्वकालस्य वार्त्ता, १७३५ तमेशवीयवर्षेऽपि तात्कालिके वङ्गदेशे लक्षमिताः संस्कृतपाठशाला आसन्। टामसमहोदयस्य कथनानुसारं १७२२ तमेशवीयवर्षे केवले मद्रासप्रान्ते सार्धद्वादशसहस्रमिताः संस्कृतपाठशाला आसन्। तासु च पाठशालासु १८८६५० मिताश्छात्राः संस्कृतविद्यामधीयतेस्म।

कालदोषेण शासनयन्त्रदोषेण च संस्कृतस्य क्रमिको ह्रासो जातः। ब्रिटिशशासकानां दुर्नीत्या आङ्गलभाषायाः प्रसारेण संस्कृतभाषाया प्रसारः सर्वात्मनाऽवरुद्धः। सम्प्रति संस्कृतपाठशालानां या स्थिति स्तामन्तरापि कथनं सर्वे जानीयुः। न कोऽपि स्वं बालकं संस्कृत पाठयितुमिच्छति, न च कश्चित् संस्कृतमधीयानो भविष्यं सुरक्षित मन्यते, न वा कस्यापि संस्कृतज्ञस्य सामाजिक्यार्थिकी च स्थितिस्ता दृशी याऽन्यन् संस्कृताध्ययनार्थमाक्रष्टुं क्षमताम्।

अतः संस्कृतस्य रक्षार्थं केचनोपाया अवलम्बनीयाः। लोकान हृदये संस्कृतस्य विषयेऽनुरागस्तु निहित एवास्ति केवलं तत्र प्ररोच नार्थं कतिपये उपाया अवलम्बनीया आसते।

संस्कृतशिक्षायां ये दोषाः समापतितास्सन्ति तेषां दूरीकरणं तदैव सम्भवति यदा संस्कृतज्ञानामपि तासु तासु प्रतियोगितापरीक्षासु प्रवेशः स्यादतः प्रतियोगितापरीक्षायाः कोटिद्वयी विधातव्या, एका प्राच्यकोटिः संस्कृतज्ञानाम् अपरा नव्यकोटिराधुनिकशिक्षाशालि नाम्। प्राच्यकोटौ संस्कृतस्य वैदुष्यं साधु परीक्ष्येत कार्यक्षमं च बाह्यलौकिकज्ञानं परीक्ष्येत, ततश्च संस्कृतज्ञा अपि तत्र पदे नियुक्ता भविष्यन्ति, यत् सम्प्रति यावत्तैर्दुरापं प्रतीयते। एवं जाते प्रतियोगिता-लभ्यपदप्राप्तिसंभवे संस्कृतस्त हीनकक्षसमाविष्टताऽपगता भविष्यति येन संस्कृताध्ययनं प्रति लोकाः प्रवर्त्तिष्यन्ते।

संस्कृतपाठशालासु भूयांसोऽध्यापकाः प्रभूतवेतना नियोक्तव्याः, तासां भवनानि विशालानि रम्याणि च विधेयानि, येन तत्रान्यत्र च पाठशालास्वधीयानानां भेदो लोकेऽसुकरावगमो भवेत्।

संस्कृतशिक्षायामर्थागमो न भवति, तेन तत्रत्या नियमाः पालयितुं न शक्यन्ते। यदि संस्कृतज्ञानां कृते प्रतियोगितासु पृथक् कोटिनिर्मीयते तदा तत्र शुल्कसमावेशोऽपि कर्तुं शक्यते येनायो वर्धेत, पाठ-शालानां स्थितिः परिवर्त्तेत, नियमानां पालनमपि शक्यक्रियं जायेत।

आङ्गलभाषापाठशालासु तद्विद्यालयमहाविद्यालयेषु च संस्कृत-स्याध्ययनमांशिकमनिवार्यं क्रियतां येन सर्वेऽपि भारतीयाः संस्कृत-माधुर्याः परिचितिं प्राप्य यथारुचि तत्र प्रवेशं प्राप्तुमुद्यमं कुर्युः । संस्कृतेऽनिवार्यतां नीते संस्कृतज्ञानां जीविकायाः प्रबन्धोऽपि सुकरः स्यात्तथा च सति संस्कृताध्ययने लोकाः स्वयमाकृष्टा भवेयुः ।

संस्कृतभाषायाः प्राथमिककक्षासु पाठनार्थं सरलाः पाठ्यग्रन्थाः ग्रहाधारेण स्वतन्त्ररूपेण च प्रकाशनीया येषामध्ययनेन भाषाज्ञानेन हैव तेषु तेषु विषयेषु प्रवेशोऽपि सौकर्येण कृतः स्यात् ।

सम्प्रति संस्कृतभाषा व्याकरणमुखेन पाठ्यते, यत्र प्रथममेव व्या-रणस्य काठिन्यमनुभूयमानं लोकानां वैराग्याय जायते तदर्थं प्राक् स्कृतस्य काव्यभागाः सरलाः पाठ्यकोटौ समादरणीयास्तदाधारेण ायमानं भाषाज्ञानं पश्चाद् व्याकरणनियमज्ञानदानेन परिष्करणीयम् । वं सति भाषाप्रौढिरधिका जायेतेत्यध्यापनानुभवलभ्यं कथनम् ।

सर्वमपीदं कार्यं तावन्न सम्पत्स्यते यावत्प्रान्तीयशासनानि केन्द्रिय-ासनञ्चात्र विषये प्रभूतमर्थराशिं सक्रियं सहयोगं च नार्पयन्ति, त्यमिदं यत्तः प्राधान्येनान्यभाषाशिक्षणं ध्यायते, गौणभावेन च ंस्कृतशिक्षणम् । यावदयं क्रमः स्थास्यति तावत्संस्कृतस्य रक्षा ृताऽप्यकृतप्रायेव स्थास्यति ।

अतोऽस्माभिः संस्कृतस्य रक्षार्थं शासनं बलवदनुरोद्धव्यम्, ायाकृते सत्येव संस्कृतं पुनर्गौरवमागतं समयानुकूलं सम्पन्नं च भविष्यति ।

# ७. महात्मा गांधी

राष्ट्रपिता महात्मा गांधीमहोदयो वर्त्तमानयुगस्य श्रेष्ठः पु
आसीत् । संसारस्य सर्वेष्वपि कोणेष्वसौ प्रसिद्धोऽभवत्, भारत
त्वात्मैव तस्य शुष्कास्थिपञ्जरे निवसतिस्म । यद्यप्यधुना स महापुरु
न जीवति परं तदीयात्मा भारतस्य कणेषु रमते ।

अस्य महात्मनो जन्म १८६९ तमेशवीयवर्षे समुद्रतटस्थि
काठियावाड़प्रान्तान्तर्गतपोरवन्दरनामके नगरे जातम्; अस्य मह
त्मनः पिता स्थानीयराज्यस्य मन्त्री आसीत्, महति कु
सञ्जाततया महताऽऽदरेण बाल्यं वीतम्, बाल्य एव त्रयोद
मिते वयसि विवाहोऽप्यस्य समजायत । १८८७ तमे वर्षे स
त्तीर्णप्रवेशिकापरीक्षस्य 'भावनगर'स्थिते 'श्यामळदासकालेज'नाम
विद्यालये समुपक्रान्तोच्चशिक्षस्यास्य विचारो विदेशं गत्वा विधि
शास्त्रमध्येतुमजायत । यद्यप्यस्य पितृरहितस्य माताऽस्मै विदेश
मनाज्ञां दातुं नैच्छत्तथापि भृशं बोध्यमाना सा कतिचन नियमा
स्वीकार्य तथाऽऽज्ञां दत्तवती । विदेशे गतेनानेन बहुशो विविध
विषयाः प्रलोभयन्तो दृष्टाः परं मात्रे दत्तवाचानेन ते दूरतः परिहृताः
प्राप्तशिक्षोऽधिगतविधिज्ञताप्रमाणपत्रश्चायम् स्वं देशमागत्य वम्ब
नगरे विधिज्ञताव्यवसायं प्रारब्धवान्, परन्तु शालीनस्वभाव
स्यास्य तत्र साफल्यं नाभवत् । प्रार्थनापत्राणि लिखित्वायं किमप्यर्ज
यन् स्वां जीविकां निर्वहतिस्म । वम्बई-नगरे स्थितस्यास्
मनसि भारतीयाङ्ग्लजात्योर्भेदः पदमादधौ, यतोऽयमेकस्मिन्नहनि
केनापि विधिसंवन्धिना कार्येण 'राजनीतिकप्रतिनिधि' ( Political ag
ente ) महोदयस्यावासं गतो यत्र तेनायं भृशमवमानितः । तदारभ्यैवायं

चिन्तयितुं प्रारभत यद्यावद्देशोयं स्वतन्त्रो न स्यात्तावदयं भेदो न शक्यतेऽपासयितुम् ।

अस्मिन्नेव समये व्यापारिकस्यैकस्य कार्येणायमफ्रिकां गतो यत्र गौराङ्गाणां दुर्व्यवहारेणायं भृशमपीड्यत । तत्र स्थितानां भारतीयानां विना हेतुं जातिमात्रकृतमपमानं वीक्ष्यायं बलवद्विव्यथे । गौराङ्गैरयं न केवलमपमतः परं विनैवापराधं ताडितोऽपि । गौराङ्गाणां व्यवहारमीदृशमालोक्य विस्मतोऽयं महात्मा भारतीयानां संघटनं कृत्वा तद्विरोधाय दृढं निश्चयं कृतवान् । अफ्रिकायामेवायं सत्याग्रहनामकममोघमस्त्रमाविष्कृतवान् यस्यास्त्रस्य सत्यमहिंसा चेति द्वे फले प्रथेते । अत्र सत्याग्रहयुद्धे साफल्यप्राप्तये 'नेटालइण्डियनकांग्रेस'नामिका संस्था स्थापिता । तया च बहुकालपर्यन्तं गौराङ्गाणां भेदनीतेस्सुदृढो विरोधः कृतः ।

तस्या एव संस्थायाः प्रतिनिधिर्भूत्वायं महात्मा १९०१ तमेशवीयवर्षे कलकत्तायामुपविष्टे भारतीयकांग्रेसस्य महाधिवेशने भागं ग्रहीतुमागतो यत्र तिलक-गोखले-मेहताप्रभृतिभिर्महानुभावैरस्य साक्षात्परिचयो जातः ।

कलकत्तातः परावृत्त्यायं यावत्पुनर्बम्बईनगरे विधिव्यवसायं कर्त्तुमयतत तावदेव पुनरफ्रिकावासिभिः सुहृद्भिरयं तत्राहूतो गत्वा तेषां सहायतायै 'इण्डियन ओपिनियन' नामकं पत्रं प्रकाशितं कृतवान् ।

अत्रान्तरे योगसूत्रस्य तथा 'रस्किन'प्रणीतस्य 'अन टू दी लास्ट' नामकस्य ग्रन्थस्याध्ययनं कृतवान् यत्प्रभावेणास्य हृदि सरलं जीवनं यापयितुं निश्चयो जातः। तदारभ्यायं कठोरब्रह्मचर्यं तथा सात्त्विकत्वमवलम्बितवान् यदस्यान्तिमं श्वासं यावदक्षुण्णमवर्त्तत ।

१९०६-७तमेशवीयवर्षेऽफ्रिकावासिनामुद्धारायायं सत्याग्रहमारब्धवान् यत्प्रसङ्गेऽनेन बहुशः कारावासोऽपि समासादितः, २० वर्षपर्यन्तं श्रान्त्वायं गौराङ्गशासनं नमयामास येन सर्वे सत्याग्रहिणो मुक्ताः सर्वाश्च प्रार्थनाः स्वीकृताः ।

१९१४ तमेशवीयवर्षे विदेशे रुग्णं गोखलेमहोदयं साक्षात्कृत्य परावृत्तेनानेन भारतं स्वकार्यक्षेत्रतां नीतम्, अत्रागतस्यास्य प्रभावेण देशस्य गतिरेवान्यादृशी समजायत, समस्तमपि भारतं भ्रान्तवतानेन देशस्य वास्तविकी स्थितिरधीता। सर्वप्रथममनेनाछूतोद्धारस्य कार्यं स्वहस्ते कृतम्, राजनीतौ दृढपदन्यासमग्रेसत्तुमयं सत्याग्रहाश्रमस्य स्थापनां कृतवान्।

१९१९ तमेशवीयवर्षे 'जलियाँवालाबाग' नामके स्थाने यदा दमन-चक्रं प्रावर्त्तत, तदा तत्र गच्छन्नयं महात्मा मध्येमार्गमेवावरुध्य बम्बई-नगरं प्रेषितः तत्प्रतिक्रियायां देशे सर्वत्र विद्रोहः प्रावर्त्तत। विद्रोहमिमं शमयितुं विदेशीयनां शासनं भारतस्य कति-पयप्रान्तेषु कांग्रेसीयजनानां मन्त्रिमण्डलं १९३७ तमेशवीयवर्षे स्थापयामास १९३९ तमे वर्षे द्वितीय-महायुद्धे तदप्यभज्यत।

१९४२ तमेशवीयवर्षे भारतत्यागस्यान्दोलनमारभ्यत यदन्ततो भारताय स्वराज्यमदापयत्। अत्रान्दोलनेऽपि महात्मा कारागृहे न्यस्तः, देशस्तत्कारावासं सोढुमशक्तो महता वेगेनान्दोलनमारब्धवान्, येन १९४७ तमेशवीयवर्षे भारतं स्वतन्त्रमजायत, दिल्लीस्थिते शासन-यन्त्रे भारतीयानामधिकारो जातो महात्मनः स्वप्नः साकारतामभजत।

धन्योऽयं महानुभावो यो विनैव रक्तपातमस्य विशालस्य देशस्य स्वतन्त्रतां सम्भविनीमकार्षीत्।

अभाग्येन परमस्य देशस्य स्वतन्त्रतां सर्ज्जयितुमवान्तरकरणीयानि सम्पादयितुञ्चास्य लोकस्य त्यागं कृत्वासौ ३०-१-१९४८ तिथौ स्वर्गमग-मत्, भारते सर्वत्र हाहाकारः प्रावर्तत।

ईदृशाः पुरुषा भारते प्रागपि जातास्तत्कोटौ तपस्यया नाम लेखयित्वायममरत्वं प्राप्तवान्। जयशब्दैरुल्लिख्यतामस्य नाम।

—०००—

## ८. पं० जवाहरलाल नेहरू

अद्यतनभारतस्य नाम्ना सह जवाहरलालमहोदयस्य नामाविच्छिन्नरूपेण सम्बद्धं विद्यते । भारते यावती समुन्नतिर्जाताऽस्ति, यावानभ्युदयोपायः प्रक्रम्यमाणो दृश्यते, सर्वत्रास्य भारतीयहृदयसम्राजः प्रभावः प्रकटरूपेण दृश्यते । अस्य महापुरुषस्य प्रभावेण हीनं भारतस्य किमपि बाह्यमान्तरिकं वा स्पन्दनं नोपलभ्यते । न केवलं भारतमेवापि तु सकलमपि पश्चात्पदं राष्ट्रजातं स्वस्वोदयाय मुक्तिसेनापतेरस्य मुखमुन्मुखीभूयावेक्षते स्म ।

अस्य महापुरुषस्य जन्म प्रयागनगरस्य मीरगञ्जनामके विभागे १८८९ तमेशवीये वर्षे जातम्, पितुः श्रीमोतीलालमहोदयस्य समृद्धतयाऽस्य बाल्यकालो महता प्रमोदेन व्यतीतः, शिक्षाऽपि वैदेशिकशिक्षाशास्त्रिणां तत्त्वावधाने प्रारभ्यत, येनाल्पेनैव कालेनास्य ज्ञानवृद्धिः सञ्जाता । श्रीएनीवेसेण्टमहोदयायाः सम्पर्केणास्य रुचिः थियोसोफीनामनि आध्यात्मिकप्रस्थाने सञ्जाता ।

पञ्चदशवर्षदेशीयोऽयं जनकेन विदेशं नीतः तत्रैव शिक्षां प्रारभत, तत्र कैम्ब्रिजविश्वविद्यालयात् १९१० तमेशवीयवर्षे एम० ए० परीक्षामुत्तीर्णः परतश्च विधिशास्त्रीयशिक्षां समाप्य लब्धोपाधिर्भारतं प्रत्याययौ ।

भारतमागत्यायं महानुभावो राष्ट्रियान्दोलने भागं ग्रहीतुमारब्धवान् । गोखलेमहोदयस्य साभापत्ये जाते पटनाकांग्रेसाधिवेशने भागं गृहीतवान् । तदानीतने 'होमरूल' संज्ञके आन्दोलनेऽप्ययं समासजत्तया भारतीयानां सहायतायै अफ्रिकायां प्रवर्त्तमानमान्दोलनं बलवत्तरं कर्त्तुं संगृह्यार्धलक्षमितं धनकोषं तत्र प्रेषितवान् येनास्य प्रभावो नितरामवर्धत ।

राष्ट्रियान्दोलने भागं गृह्णन्नप्ययं विधिव्यवसायमप्यकरोत्, परः
देशभक्तिवशीकृतहृदयोऽयं विधिव्यवसायं सर्वात्मना कर्तुम् नापारयत
पश्चात्तु स व्यवसायस्त्यक्तोऽपि ।

१९१६ तमेशवीयवर्षे श्रीमती कमलादेवी अस्यार्धाङ्गिनीपदमभूषयत
तस्यैव पाणिग्रहणस्यावसरेऽयं काश्मीरेषु भ्रमणं कृतवान् । अत्रै
वर्षे लखनऊकांग्रेसावसरे महात्मना गान्धीमहोदयेन सहास्य साक्ष
त्परिचयो जातः । एतदनन्तरं देशे तास्ताः 'जालियाँवालाबाग' 'रौले
ऐक्ट' 'मार्शल ला' प्रभृतयो घटना जाता या अस्य गतिविधिं सर्वथ
क्रान्तिमयीमकुर्वन् ।

१९२१ तमेशवीयवर्षे सम्राट्कुमारस्य स्वागतं विरुन्धन् अयं कार
वासदण्डं लब्धवान्, तदनन्तरं त्वयं कारावासमसकृत् प्रापत् ।

१९२६ तमेशवीयवर्षे रुग्णायाः स्वधर्मपत्न्याः चिकित्सार्थम
पुनर्विदेशं गतो यत्र विदेशीयविशेषज्ञैः 'रोम्यां रोलां' 'अर्नेष्ट टालर
प्रभृतिभिः सहास्य साक्षाद्विचारविमर्शो जातः, अत्रैव यात्रायाम
समाजवाद-नात्सीवाद-प्रभृतिविचारधारणां गम्भीरमध्ययनं कृतवान् ।

यूरोपात्परावृत्तस्यास्य व्याख्यानेषु वह्निस्फुलिङ्गाः प्रकटन्तिस्म
अयमेव सर्वप्रथमं पूर्णस्वतन्त्रताप्रस्तावं कृतवान्, यः कालेन कांग्रेससभय
पारितोऽपि जातः ।

यदायं लाहौरकांग्रेसाधिवेशने सभापतिः सन् पूणस्वतन्त्रताया
घोषणां कृतवाँस्तदवधि देशस्य राजनीतिरन्यामेव दिशं प्रति प्रस्थिता ।
अत्रैव प्रक्रमेऽयं कारावासमसकृत् प्राप्तवान् ।

१९३२ तमेशवीयवर्षे पुनरयं 'किसान' आन्दोलनस्य संबन्धे कारावासं
भेजे । ततो मुक्तमात्र एवायं विहारभूकम्पेन पीडितां जनतां सेवितुं
कुद्दालपाणिरनावृतचरण एव च प्रस्थितः । तदानींतनमस्य साहसं
स्मरन्तो विहारवासिनोऽस्य क्रीतदासा इवात्मानं मन्यन्ते ।

कारावासस्थितस्यैवास्य प्रिया भार्याधिकास्वास्था भूत्वा विदेशं गता यत्र सा पतिसाहचर्यं प्राप्याल्पेनैव कालेन मृता ।

एतत्परतस्तु देशे क्रान्तिवात्या महता वेगेन प्रवहतिस्म, यत्र मुख्यो नायकोऽयमसकृत् कारावासं प्रापत्, तत्र स्थितेनैवानेन 'डिस्कवरी ऑफ इण्डिया' प्रभृतीनि स्वीयानि प्रसिद्धतमानि पुस्तकानि प्रणीतानि ।

१९४२ तमेशवीयवर्षे भारतत्यागान्दोलनेऽप्ययं प्रधानयोध आसीत्, कारावास्थितोऽयं स्वाध्यायलेखनयोः समयमनैषीत् । तदनन्तरं ततो निर्गतोऽयं क्रिप्समिशनप्रभृतिराजनीतिघटनासु भागं गृहीत्वा देशस्य स्वतन्त्रतां समीपागतामकृत् ।

यदा चेदमीयप्रयासभरण भारतं स्वतन्त्रमजायत, तदायं सर्वापेक्षया दुरूहं दुर्वहं च प्रधानमन्त्रित्वमारोपितो पत्र स्थितं जवाहरलालं भारतीयजनता समुदयमानं सूर्यमिवाहरहः प्रणमति स्म ।

सम्प्रति भारतीयानां पुरतोः विविधाः समस्या विद्यन्ते, देशस्य राजनीतिकस्वतन्त्रतायां जातायामपि आर्थिकी स्वतन्त्रता न जाता, वर्गद्वेषो ह्रासं गतोऽपि सर्वथा नोन्मूलितः । शिक्षायाः समस्या न समाहिता, खाद्यविषयकं पारवश्यमपि नापासितम्, तदस्यां स्थितौ एवास्य महापुरुषस्य १९६४ तमेशवीयवर्षे मईमासस्य ७ तमे दिनाङ्के सहसा भारतीयदैवदुर्विपाकवशात् पाञ्चभौतिकं शरीरं कालेनात्मसात् कृतं किन्तु यशःशरीरं नैव, प्रत्युत सर्वातिशायि तत जगत्सम्मानपात्रं जातम् ।



## ६. देशरत्न-राजेन्द्रप्रसादः

येषां महानुभावानां साधनाभिस्तपस्याभिश्च भारतमिदं स्वातन्त्र्यमभजत, तेष्वन्यतमो मुख्यतमश्चायं राजेन्द्रप्रसादमहोदयः स्वीयया सरलतया निःस्पृहतया योग्यतमतया चारित्रिकोत्कर्षवत्तया च देशरत्नपदेन व्यवाह्रियते। कठिनात्कठिनतमेऽपि परीक्षासमयेऽयं स्वमुखमण्डले चिन्तारेखां नाविर्भावयति स्म, अनयैव विशिष्टतयाऽयं देशस्य प्रथमराष्ट्रपतित्वेन वृतः।

श्रीराजेन्द्रप्रसादस्य जन्म विहारराज्ये सारनमण्डलान्तर्गत-'जीरादेई'नामके ग्रामे १८८४ तमेशवीयवर्षे जातम्। प्रारम्भिकी शिक्षा पारसीभाषायां प्रारभ्यत, परतश्च 'जिलास्कूल, छपरा'-'टी० के० घोष एकेडमी, पटना'नामकयोर्विद्यालययोरधीत्य १९०२ तमेशवीयवर्षेऽयं प्रवेशिकापरीक्षायां सर्वप्रथमं स्थानं प्राप्तवान्। तदनन्तरं चोच्चशिक्षाप्राप्तयेऽयं कलकत्तास्थिते 'प्रेसीडेन्सी कालेज'नामके स्थाने गतवान् यतोऽयम् एम० ए० पदं प्राप्तवान्। यावदयं छात्र आसीत्तावदस्य पदं सर्वोत्कृष्टमासीत्।

यस्मिन् समयेऽयम् एम० ए० परीक्षामुत्तीर्णवान् तस्मिन् समये कलकत्तानगरे वङ्गभङ्गमनुसृत्य महान्दोलनं प्रवर्त्ततेस्म। अस्यापि महानुभावस्य कोमला भावना तस्य प्रभावेण प्रतिहन्यतेस्म। एवं राष्ट्रियभावनाप्रवाहपतितस्यास्य हृदि देशभक्तिरुद्दामभावमभजत, ततश्चायं राष्ट्रियमहासभायाः सदस्यतां जग्राह। अस्मिन्नेव समयेऽयं पटनानगरे विहारप्रान्तीयच्छात्रसम्मेलनं कृतवान्।

छात्रावस्थायामवसितायां राजेन्द्रप्रसादमहोदयः कियन्तं काल ।वत् मुजफ्फरपुरस्थे आङ्ग्लमहाविद्यालये आङ्ग्लभाषाऽध्यापक-

पदं ततश्च परतः कलकत्तास्थिते सिटीकालेजे अर्थशास्त्राध्यापकपदमलङ्कृतवान् । अत्रान्तर एवायम् विधिपरीक्षामप्युत्तीर्णः । विधिव्यवसायं कुर्वन्नेवायं विधिमहाविद्यालयेऽध्यापनकार्यमपि कृतवान् ।

१९१३ तमेशवीयवर्षे जाते विहारप्रान्तस्य निर्माणे स्थापिते च तत्र प्रधानन्यायालये राजेन्द्रप्रसादः पटनामागत्य तत्र विधिव्यवसायं प्रारभत । यस्मिन्ननुदिनमुन्नतिर्भवन्ती दृश्यते स्म । १९१७ तमेशवीयवर्षे चम्पारनसत्याग्रहावसरेऽयं महात्मगान्धीमहोदयस्य सहायतायां लग्नो जातः । तदनन्तरं त्वयं गान्धीमहोदयेन चाल्यमाने सत्याग्रहान्दोलने सर्वात्मना मनोयोगं दत्तवान् विधिव्यवसायं च त्यक्तवान् ।

असहयोगान्दोलनं विधिवच्चालयितुं तदा विहारप्रान्तीयकांग्रेससभायाः सङ्घटनं नितान्तमावश्यकमासीत्तदयं तत्रासक्तः प्रतिगृहं भ्रान्त्वा राष्ट्रभाषाप्रचार–मादकवस्तुनिषेध–अस्पृश्योद्धारादिरचनात्मककार्येषु भागमग्रहीत् ।

१९२३ तमेशवीयवर्षे राजेन्द्रप्रसादो भारतीयकांग्रेससभाया महामन्त्री निर्वाचितः । तदारभ्यास्वतन्त्रताप्राप्ति देशरत्नोपाधिकोऽयं महानुभावो महात्मगान्धीमहोदयस्य दक्षिणहस्तवद् व्यवहरतिस्म । नानाविधेषु देशहिताधायिकार्येषु त्रिवारमनेन कारावासोऽप्यनुभूतः । १९३४ तमेशवीयवर्षे बम्बईनगरे भाविनि कांग्रेसाधिवेशनेऽयं राष्ट्रपतिपदगौरवमवाप्तवान् ।

तस्मिन्नेव वर्षे विहारभूकम्पेऽनेन कृता सहायता विस्मर्तुं न पार्यते । १९४० तमेशवीयवर्षे व्यक्तिगतसत्याग्रहाऽवसरेऽयं स्वप्रान्तस्य नेतृत्वं कृतवान् । अन्तिमे महान्दोलने त्वयं रुग्णः सन्नपि वर्षत्रयं यावत्कारावासमन्वभूत् ।

महताऽऽयासेन सम्पादिते देशहिते यदा प्रयाता परतन्त्रतारजनी तदोदयति स्वातन्त्र्यसूर्ये विधाननिर्मातृसभायाः प्रधानतां निर्वाह्य जाते

मन्त्रिमण्डलनिर्माणे खाद्यमन्त्रिपदमलङ्कृत्य चायं यां योग्यतां प्रकाशितां कृतवान् सा विस्मयमकृत सचेतसां पश्यताम् ।

तयैवास्य महानुभावस्य योग्यतयाऽऽकृष्टो देशः विधिवद्गणतन्त्र-स्थापनायां निर्वृत्तायां प्रथमराष्ट्रपतिपदेऽमुमभिषिच्य पुनस्तदावर्त्त्य च स्वां गुणग्राहितां प्रकटीकृतवान् ।

अस्य हि राजेन्द्रप्रसादमहोदयस्य जीवने सरलतायाः परया काष्ठया सह चाणक्यस्य नीतिज्ञता समाविष्टा विद्यते स्म ।



## १०. आचार्य विनोबाभावे

आचार्यविनोबाभावेमहोदयो वर्त्तमानयुगस्य श्रेष्ठः संस्कारक-स्तथा महात्मगांधीमहोदयस्य प्रधानुयायी विद्यते। महात्मगांधी-महोदयस्य सेवाभावनाया यावतांशेनानुकरणमनेन कृतं तावतांशेन केनचिदन्येन लोकनायकेन कृतमिति वक्तुं न शक्यते। एतस्य महानुभावस्य भूदानयज्ञः सम्प्रति भारते प्रथते। स्वतन्त्रभारते चैवं रूपमानेतुमुद्युक्तानेकेषु जनेषु सर्वाधिकसफलताऽनेनैव लब्धा। केवलया तपस्यया लोकचेतनाजागरणया चायं देशस्यार्थिकस्थितेरा-मूलचूलं परिवर्त्तनं कर्त्तुमुद्यतो दृश्यते ।

अस्य महापुरुषस्य जन्म १८७५ तमेशवीयवर्षे महाराष्ट्रप्रदेशे एकस्य ब्राह्मणस्य गृहेऽजायत । अनेन प्राथमिकी शिक्षा 'गागोदा' नामके ग्रामे, माध्यमिकी शिक्षा च 'बडौदा' नगरे लब्धा । उच्चशिक्षा तु स्वल्पैव समासादिता, यतोऽयं सत्सङ्गे समधिकं कालं यापयितुं प्रावर्त्तत । १९७८ तमेशवीयवर्षे सांसारिकतायां विरज्यायं स्वीयानि सर्वाण्येव प्रमाणपत्राणि भस्मसादकरोत् । तदनन्तमयं महात्मगांधी-महोदयस्य संसर्गे समागतो यावज्जीवनं ब्रह्मचर्यस्य देशसेवायाश्च व्रतं गृहीतवान् । अध्यात्मशास्त्रस्याध्ययने मग्नमनसाऽनेन कतिचन हाय-नानि व्यतियापितानि ।

एवं गम्भीरमध्ययनं विधाय विनोबामहोदयो देशसेवायां संलग्नो जातो यत्र गान्धीमहोदयस्य कार्ये साहायकं कर्त्तुं साबरमतीस्थिते तदाश्रमे वासमकृत, परतश्च कारावासान्मुक्तमात्रममुं गान्धीमहोदयो हरिजनान्दोलनप्रसङ्गे विनोबामहाशयं त्रावनकोरनामके स्थाने प्रेषित-वान् । १९३२ तमेशवीयवर्षे पुनरयं कारावासं गतः । अत्रैव पर्याये कारावासेऽस्य 'गीताप्रवचनं' नाम पुस्तकं मराठीसाहित्यस्य प्रसिद्ध-पण्डितेन 'सानेगुरुजीमहाशयेन' लिपिबद्धं कृतं यत्पश्चात्प्रकाशितमभूत् । 'धुलिया' कारावासे निवसत एवास्य बुद्धौ भूमिवितरणविषयो विचारः प्रादुरासीत्, सहयोगिभ्यो यद्यप्ययं विचारः प्रथमं नारोचत, परं विनोबामहोदयः स्पष्टमुक्तवान् यदहं स्वतन्त्रताप्राप्त्यनन्तरं भूमिवितरणं कर्त्तुमशक्यं प्रयासं करिष्यामि ।

पूर्वनिश्चयानुसारमयं स्वतन्त्रताप्राप्त्यनन्तरं 'तेलङ्गाना' समीपस्थे 'पोचमपल्ली' नामके ग्रामे भूदानयज्ञस्य प्रथमारम्भं कृतवान्, यत्रायं जलवायुवद् भूमिमपि सार्वजनिकं वस्तु व्याहृतवान् । अतो भूमौ कस्याप्येकस्याधिकारो न युज्यते । यदि कस्यापि जनस्य समीपे केनापि हेतुनाऽधिका भूमिरागताऽस्ति तदाऽसौ कर्त्तव्यबुद्ध्याऽधिकां भूमिं कस्मैचन भूमिहीनाय वितरतु ।

विनोबामहोदयेन चाल्यमानस्य भूदानयज्ञस्य योजनेयमस्ति—यत्

प्रत्येकग्रामे भूमिहीनकृषकाणां कृते भूमिरासाद्येत । अत्र यागे सर्वेऽपि यथाशक्ति भूमिं ददतु । यदि कुत्रापि ग्रामे सर्वापि भूमिराप्यते यदा तत्र भूमेः समविभाजनद्वारा तत्र ग्रामराज्यस्थापना कृता स्यात् । न केवलं भूमिरेवापि तु धनसामग्र्यादिदानमपि भूदानानुगं प्रवर्त्तितं महात्मना विनोबामहोदयेन ।

स्वतन्त्रे देशे ज्ञानकृतां दानप्रवृत्तिं जागरयितुं तद्द्वारा देशे भविष्यन्तीं रक्तक्रान्तिं च दूरीकर्तुं सातिशयं यतमानोऽयं महता श्रमेण संप्रति पदयात्रामाचरति, तत्रापि नियत सर्वव्यवहारस्यास्यानुयायिनां संख्याऽनुदिनमेधते ।

भूदानेन सहैव खादीग्रामोद्योगादिविषयेऽप्यस्य सतर्का प्रतिभा नवं विचारमुपस्थापयन्ती लोकप्रियतां प्रपद्यते ।

आत्मन् उद्देश्यानां पूर्त्तये सततश्रमपरायणोऽयं महामनाः पद्भ्यामेवाखिलां भारतभूमिं भ्रमितुं कृतमतिरस्ति ।

सम्प्रति महात्माऽयं पञ्चकोटिपरिमितभूकुडवं याचते, येन कियतामपि भूमिहीनजनानामुपकारः कृतः स्यात् ।

संस्कृतभाषया सममेवानेन विदेश्यभाषाणामपि बहूनामर्जितं ज्ञानं यदाधारेण सर्वधर्माणां ग्रन्थानधीत्य तेषां तत्त्वं च नूतनया प्रणाल्या व्याख्याय यदा जनतां बोधयति तदा सा मन्त्रमुग्धेव प्रतीयते । प्रतिदिनं प्रार्थनावसरेऽनेन कृतं प्रवचनं पूर्वकालिकानृषीन् स्मारयति ।

तदयं गान्धीमहात्मनः स्वप्नं सकारतां नेतुं प्रयतमानः, सर्वाभिरपि जनताभिः साशाभिर्दृग्भिः प्रेक्ष्यमाणगतिविधः शतं समाः सुखं जीवत्विति वयं परमात्मानं प्रार्थयामहे ।



## ११. महात्मा बुद्धः

२५०० वर्षपूर्वम् अस्य भारतवर्षस्योत्तरभागे सम्प्रति प्रथिते वस्तो-
ण्डले शाक्यवंशीयो राजा शुद्धोदनो राज्यमकृत। तस्य राजधानी
कपिलवस्तु' संज्ञया प्रसिद्धाऽऽसीत्। अयं शाक्यवंशः सूर्यवंशस्यैवांश-
त इतीतिहासविदः।

महाराजशुद्धोदनस्य द्वे धर्मपत्न्यौ, तयोः प्रथमा 'माया' द्वितीया
'प्रजावती'। द्वयोरप्यनपत्यतया महाराजः खिन्न आसीत्। एकस्यां
रात्रौ मायादेवी स्वप्ने चतुर्दन्तं गजं प्रकाशमयषट्कोणां ताराञ्चैकां
ददर्श, तदनन्तरं सा गर्भमधत्त। गर्भावस्थायां स्वपितृगृहं गच्छन्त्या
तया मध्येमार्गं वृक्षशाखामादाय स्थितयाऽक्लेशलेशमेकस्तनयः प्रसूतो
यो जातमात्र एव सप्त पदानि चचाल। स एव बालः सिद्धार्थनाम्ना
प्रासिद्ध्यत्। माया तु बालं सिद्धार्थं विहायाल्पेनैव दिनेन स्वर्गं गता, परं
प्रजावती तस्य पालनपोषणयोर्व्याप्रियत।

विचित्रप्रकृतिरयं बालको बालक्रीडनकानि विमुच्य ध्यानं नाटयति,
मृगयार्थं वनं प्रेषितोऽङ्कगतमपि हरिणं न निहन्ति, श्रान्तमश्वं पादचारी
त्वा विश्रमयति।

'कदाचिदयं विरक्तो जायेते'ति चिन्तया बाल्य एव राजा सिद्धार्थस्य
परिणयसम्बन्धं यशोधरा-नामिकया सुन्दर्या राजकुमार्या सहाकार्षीत्।
सिद्धार्थस्य निवासार्थं यः प्रासादः कल्प्यतेस्म तत्र कोपि दुःखी रुग्णश्च
गन्तुं न शक्नोतिस्म।

एकदा रथमारुह्य भ्रमणार्थं गच्छन् राजकुमारो यष्टिवरं वृद्धं रुग्णं
सीदन्तं च, मृतं परैरुह्यमानं च दृष्ट्वा संसारस्यासारतां भावयामास।
संसारभोगेभ्यो विरक्तः सिद्धार्थः स्वां प्रियां यशोधरां नवजातं पुत्रं
राहुलं च स्वपन्तौ परित्यज्य गृहात्प्रवव्राज। अनामां नाम नदीं तीर्त्वा
कुमार- स्वाभूषणानि सारथये च्छन्दकाय वितीर्य साश्वं तं विसृज्य च
तरकरवालकृत्तकेशः सत्यधर्मान्वेषणाय कतिचन विदुष उपससाद।

विदुषां संसर्गे सत्यं ज्ञानमनुपलभमानोऽसौ तपश्चरितुमियेष। कठोरतपस्यायामनाहारेण शुष्यच्छरीरस्य तस्य केवलमस्थानि ददृशिरे। पश्चादेसौ वीणावादकमुखाद्वीणातन्त्र्या अनतिश्लथत्वमनतिगाढत्वं चाकर्ण्य तपसि मध्यमं मार्गं निरचैषीत्। वटवृक्षतलासीनस्यानाहारकदर्थितस्य च तस्य तृप्तये सुजाता नाम काचिदबला पायसमुपायनीकृतवती।

कृतपायसाहारः आस्तीर्णकुशश्चासौ बोधिवृक्षस्याधो ज्ञानप्राप्तीच्छया ध्यानमग्नस्तस्थौ, यत्र मारः सहस्रशः प्रलोभनैस्तं लोभयितुमचेष्टत, परमसौ पुष्करपलाशवन्निर्लेप एवातिष्ठत्। बुद्धस्तत्रैव ज्ञानं प्राप्य काशीमागत्य पञ्चभद्रीयविप्रानेव प्रथमं स्वं ज्ञानं प्रदाय कृतार्थानकृत।

क्रमशस्तदनुगामिनां संख्याऽवर्धत। काशीसमीपवर्त्तिनि सारनाथनामके स्थाने धर्मचक्रं प्रावर्त्तयत्, तदीयशिक्षायाः प्रधानभावेन चत्वार उपदेशा आर्यसत्यनाम्ना प्रथन्ते, ते च—

१—किं दुःखम्? २—तत्कथमुत्पद्यते? ३—को दुःखनाशः? ४—स कथं भवति? इति।

एतत्साधनतयाऽसौ अष्टाङ्गानि प्रकाशितवान्, यान्यधोल्लिखितरूपाणि सन्ति—

१—सम्यग्दृष्टिः, २—सम्यक्सङ्कल्पः, ३—सम्यग्वचः, ४—सम्यक्कर्म, ५—सम्यगाजीवः, ६—सम्यग्व्यायामः, ७—सम्यक्स्मृतिः ८—सम्यक्समाधिः।

बहवो लोका बुद्धस्य शिष्यत्वं प्राप्ताः। एकदा गयपर्वते प्रसृतं दवाग्निं निदर्श्य बुद्धः शिष्यानुक्तवान्—समस्तमेव विश्वमेवमेव रागादिदुःखज्वालाभिर्दह्यते, स एव बुद्धिमान्यो बहिर्भूयाध्यात्मतत्त्वान्यन्वेषयति, गयपर्वताग्रे गत्वा बुद्धो राजगृहं गतो यत्र महाराजो बिम्बसारस्तच्छिष्यत्वं प्रपेदे।

अनेकेषु स्थानेषु भ्रान्त्वा बुद्धः स्वनगरमागतः । यदा पिता शुद्धोदनः स्वं कुमारं स्वनगरे एव भिक्षमाणं शुश्राव तदाऽतिविव्यथे । सामात्यो राजा बुद्धमुपेत्य राजभवनं तमानिनाय, यत्रासौ यशोधरां राहुलेन समं ददर्श ।

समीपागतं बुद्धं वीक्ष्य यशोधरा पुत्रं राहुलमुवाच वत्स, गच्छ, पितरं पैतृकं धनं याचस्व । त्यागधनः पिता तस्मै त्यागमेवोपदिश्य तमपि स्वशिष्यं चकार ।

अनन्तरमसौ तत्र तत्र भ्रान्त्वा कोटिशो जनानुपदिश्य तानि तानि विस्मयावहानि कर्माणि च प्रकाश्यैकदा आम्रपाली-नामिकाया गणिकाया आवासमुपेत्य तां निष्ठां लम्भयित्वा च तया दत्तमाम्रवनं स्वीकृत्य भिक्षुस्तत्र न्यवसत् ।

भगवान् बुद्धो जातिवयोधर्मनिरपेक्षः सन् स्वोपदेशैर्मानवजातेः कल्याणमकृत । तस्योपदेशास्त्रिपिटक-नामके संग्रहग्रन्थे संगृहीताः सन्ति ।

अवसाने भगवान् कुशीनगरमागत्य तत्र शालवने आनन्दनामकेन स्वशिष्येण सेव्यमानो बुद्धः परनिर्वाणमाससाद ।

तदस्थीनि गृहीत्वा देशस्याष्टसु स्थानेषु रक्षितानि, तत्र स्तूपा निरमीयन्त ।

एवं भगवता बुद्धेनालौकिकं ज्ञानमयं ज्योतिः सर्वत्र प्रचारितं यदद्यापि भारतस्य गौरवं देशे च सर्वत्र प्रख्यापयति ।

---

## १२. ध्वनिवाहकयन्त्रम्

ध्वनिवाहक ( रेडियो ) यन्त्रमाधुनिकयुगस्य सर्वाविष्कारापेक्षया समधिकाश्चर्यजनक आविष्कारो विद्यते । अयमाविष्कारो विद्युदाविष्कारमाधारीकरोति । यदि विद्युदाविष्कृता नाभविष्यत्तदा ध्वनिवाहकयन्त्रस्याविष्कारो नाभविष्यत् ।

प्राचीनकाले विनैव ध्वनिवाहकयन्त्रं तपस्यापरायणा ऋषयो दूर-देशस्य वृत्तान्तं ध्यानदृष्ट्याऽध्यगच्छन्, महाभारते पठ्यते सञ्जयो दिव्यदृष्ट्या महाभारतयुद्धस्य वृत्तं दृष्ट्वा हस्तिनापुरस्थ एव धृतराष्ट्राय न्यवेदयत्। अधुना तु ध्वनिवाहकयन्त्रसाहाय्येन विना कमपि प्रत्यक्ष-माधारं समाचाराः स्थानात्स्थानान्तरं प्राप्यन्ते। यदि ध्वनिवाहकयन्त्रेण सह ( Television ) रूपदर्शक-यन्त्रस्य योगः स्यात्तदा वक्तुः स्वरूपमपि पश्यञ्जनोऽधिकमानन्दं विन्देत।

अस्य ध्वनिवाहकयन्त्रस्याविष्कारक इटली-वास्तव्यः 'मारको महाशयः १८७४ तमेशवीयवर्षे समजायत। बाल्ये अमितप्रतिभाशा तथाऽतिगभीरप्रकृतिश्चायमासीत्। अयं बाल्यादेव विज्ञानप्रवृत्त आसी अयं विज्ञानाध्ययनप्रवृत्त एव ध्वनिवाहकयन्त्राविष्कारसंलग्न आसी मारकोनीमहाशयो निजाविष्कारे प्रथमसफलो भूत्वापि प्रारम्भे स्व दूरपर्यन्तं संवादप्रेषणे क्षमो जातस्तदनन्तरं श्रमेण सुदूरपर्यन्तं संव प्रेषयितुं क्षमोऽजायत।

अत्र मञ्जूषाकृतियन्त्रेऽन्तः केचन तादृशा यन्त्रभागा भवन्ति ध्वनिं प्रकाशरूपतामापाद्य त्वरया सुदूरगमनक्षमतां प्रापयन्ति, ग्राह च यन्त्रे तादृशा यन्त्रभागा भवन्ति ये प्रकाशं ध्वनिरूपे परिवर्त्य श्रव योग्यतां नयन्ति।

ध्वनिवाहकयन्त्रेण संभवतो लाभान् वयं प्रत्यक्षमीक्षामहे। वयं कि तैव कालेन संसारस्य कुत्रापि भागे संवादं प्रेषयामः, गृहस्था एव दूरदेश वृत्तान्तान् शृणुमः, येषां विदुषां संगीतज्ञानां च दर्शनं दुष्करं तेषां भाष णाणि सङ्गीतानि च श्रुत्वा स्वं जीवनं धन्यं मन्यामहे।

ध्वनिवाहकयन्त्रं न केवलं मनोविनोदसाधनमपि तज्ज्ञानसाधन मपि। सम्प्रति शिक्षाप्रसारकार्यमपि ध्वनिवाहकयन्त्रद्वारा सम्पाद्यते। कुतोऽपि केन्द्रात् संगीतस्य शिक्षा प्रसार्यते कुतोऽपि च निरक्षरेभ्योऽक्षर-शिक्षा दीयते।

सामाजिके आर्थिके राजनैतिके च क्षेत्रे सर्वत्र ध्वनिवाहकयन्त्रस्य

सर्वतोमुख्युपयोगिता प्रेक्ष्यते। अस्माकं नेतारो ग्रामाद् ग्रामं भ्रान्त्वा यत्प्रचारकाय प्रागकुर्वन् सम्प्रति स्वकार्यक्षेत्रस्था एव ते ध्वनिवाहकयन्त्र-साहाय्येन स्वमतं प्रचारयन्ति, अनेन प्रकारेण समयस्य श्रमस्य च रक्षा कृता भवति । अस्माकं प्रधानमन्त्री पं० नेहरूमहोदयः स्वीयमाशयं ध्वनि-वाहकयन्त्रद्वारैव देशवासिनो बोधयति स्म ।

सत्यपि ध्वनिवाहकयन्त्रस्य परमोपयोगित्वे वयं ततस्तावत् प्रभूतं लाभं न प्राप्स्यामो यावत् प्रतिगृहमस्य यन्त्रस्य प्रचारो न जायते। मूल्याधिक्येन सम्प्रति यन्त्रमिदं सर्वेषां गृहे नास्ति । अत्रः देशे ध्वनि-वाहकयन्त्रक्रयणोपयोजनक्षमशक्तयो लोका बहवो न सन्ति । यावन्मूल्यं न ह्रासं गच्छति, सर्वेषां तत्क्रयणशक्तिर्नोद्भवति तावत् सर्वकारशासन-स्येदं कर्त्तव्यं भवति यत्तत् प्रतिग्राममेकं ध्वनिवाहकयन्त्रं व्यवस्थापयेत् । यत्र पुस्तकालयः स्यात्तत्र ध्वनिवाहकयन्त्रं तिष्ठेत् ।

वैज्ञानिका आशासते यद् ध्वनिवाहकयन्त्रद्वारा अन्यान्यग्रहैः सह संपर्कः स्थापितो भवेदिति, यदीदं सिद्ध्यति तदा मानवजातेरितिहासे सर्वथा नवं युगमारब्धं भविष्यति ।

---

## १३. गङ्गा

इयं भगवती गङ्गा माता यदि किमप्यन्यदकृत्वा केवलं भीष्मपिता-महाय जन्म दत्त्वैव विरताऽभविष्यत्तथापि आर्यजातेर्मातृतया प्रभूतमादर-मध्यगमिष्यत् । भीष्मस्य भीषणप्रतिज्ञापालकता, निःस्पृहता, ब्रह्म-चारिता तथा तत्त्वज्ञता चाप्रलयमस्य धरामण्डलस्य महतो बहुमानस्य स्थानम् ।

अपि साधारणी नदी यदि दुर्भिक्षाद् भयमपासयति, शुद्धवायुसञ्चर-णावसरप्रदानेन च तनोरस्वास्थ्यमपनुदति, का कथा तदा गङ्गायाः, अस्याः कूले वसतिर्हि स्वर्गाधिष्ठानको वासः, अशरीरत्यागेनासादितो देवभावः, अन्तरैव भुजि तृप्तिः, विनैव च जलस्पर्शमन्तर्बहिश्च शुद्धिः ।

अद्याप्यस्याः परिसरे मन्दपदन्यासमुपसर्पतो मम ध्याने न केवलं हरितहरिता क्षेत्रपरम्परा समायाति, न वा नावा स्थानात्स्थानान्तरं व्रजन्तः सांयात्रिका एव समुपनिपतन्ति, किन्तु सद्यः स्नातः स्रवत सलिलसीकरेण मौक्तिकस्रं सिनोमिव जटामालम्बमानः––'मातः शैल सुतासपत्नि बसुधाशृङ्गारहारावलि' इति स्फुटस्वरं पठन् वाल्मीकिर्बलु कामय आस्तरणे पद्मासनमाबध्योपविष्टः 'तत्तत्तीर्थगतैः कदर्थशतैः किन्तै रनर्थाश्रितैः' इति आवर्त्तयन् कालिदासः, 'पतन्ती स्वर्लोकादवनितल शोकापहृतये' इत्यादिना श्लोकेन भगवत्या भागीरथ्या गुणानेव दोषतया गणयन् पण्डितराजः, बुद्धस्य भगवतः पीतवसनैः श्रावकैः समधिष्ठितै विहारराशिः, हर्षसम्राजो वीरविरुदराजिः, महात्मनां तुलसीदास-कबीरप्रभृतीनां भक्तिदर्शनमिश्रा मिष्टा च कवितावली बलादिव हृदयमाव र्जयन्ति ।

न चेयं जाह्नवी सर्वत्र समानरूपा, गङ्गावतरणस्थले पितुर्हिमभू धरस्य क्रोडे क्रीडन्त्या अस्याः कन्यारूपम्, ततोऽवतरन्त्या अस्या 'उत्तरकाशी–'सविधे देवदारुद्रुमानन्तरयन्त्याः काव्यमयमिव यमक मुपदर्शयन्त्या मुग्धतामनोहरं रूपम्, ततोपि परतो देवप्रयागेऽलकनन्दया सख्येव सह क्रीडन्त्या अस्याः कैशोरसुभगं सौन्दर्यम्, परतश्च कनखले शिलाशकलेषु विशीर्य शतधारत्वमिबासाद्यास्या विहरणस्वाच्छन्द्यम्, उपकर्णपुरं प्रवहन्त्याश्चास्या ऐतिहासिकं मन्दगमनविजृम्भितं प्रौढत्वम्, प्रयागे च चिरवियुक्तायाया इव सख्याः कालिन्द्या अङ्के सस्नेहः प्रवेश इवानुष्ठीयमानो नाना–विधयाऽऽकारभङ्ग्या परमां चमत्कृतिं तनुते, एकत्र दृष्टेयमपरत्र दृश्यमानापि तत्त्वेन प्रायः प्रत्यभिज्ञायेत, यदि हि नाम लोकातिशायिनी कीर्तिगाथा नेमामनुसरेत् ।

प्रयागात्पूर्वतः स्यन्दमाना चेयं कल्मषनाशिनी महर्षेर्जह्नोः कन्या शैशवमतीत्येव प्रौढिमादधती दृश्यते, प्रयागं यावदियं तपस्विकन्येव विमलाशया सरला च प्रतीयते, परं यमुनया––प्रौढये व प्राणप्रियसख्या

कृतमन्त्रणा सेयं जहातीव प्राक्तनं रूपम्, नातः परतः पूर्ववत् क्रीडति, यमुनाया मानिन्या द्रौपद्या इव श्यामपरिधानं वपुः स्मारयन्तीयं कुल-वधूरिव सौभाग्यशालिनी प्रतीयते।

प्रयागादारभ्य चास्या महानदीभिः सह परिचयो वर्द्धते, तीर्थराज एव हि मथुरावृन्दावनयोः सरसाभिः कथाभिः स्वं वपू रोमाञ्चितवती यमुना श्रीकृष्णस्य स्मरणं समर्पयत्यस्यै, वरुणा विपुलं ज्ञानमुपहरति वाराणसीक्षेत्रे, पुरः प्रसृतायाश्चास्याः सखी सरयूरधिकण्ठमिव कृता-लिङ्गना मर्यादापुरुषोत्तमस्य रामचन्द्रस्य विरहस्नेहकथां कथयति, दक्षिणस्या आयान्ती चर्मण्वती रन्तिदेवस्य यज्ञमिव स्मारयति, उप-पाटलिपुत्रं च कलकलनादेन प्रवहमाणः शोणभद्रो मगधशासकानां यशांसि गायन्निवामूमाह्लादयति, एकतश्च भक्तत्राणोद्यतस्य गजोद्धा-राय धावतो भगवतः क्षणिकेन दर्शनेनेव शान्तमला नारायणी स्वमस्या अङ्के निलाययति। ततश्च सर्वथा समृद्धाया अस्या विहारभूमि-मतीत्य कामरूपप्रदेशे ब्रह्मपुत्रेण सह जायते विवादः, ब्रह्मकमण्डलुवासेन दृप्ताया अस्याः—ब्रह्मपुत्रेऽपि विशेषादरवैधुर्यात्। परं समुद्रप्रदर्शन-व्यग्राया अस्या जाते सात्त्विकभावकृत इव वैचित्र्ये कदा ब्रह्मपुत्रेण मिलनं, कदा च पद्मा, मेघनाप्रभृतिनामधारणमित्यादि स्मर्त्तुमियं न लभतेऽवकाशम्, अत आरभ्यैव चास्याः समुद्रविषयः प्रकटीभवति सोऽनुरागो यदुद्रेकमहिम्ना पितुरङ्कप्रदेशं स्वीयबाललीलासाक्षितया प्रियतममपि परित्यज्य, शिलासङ्घातान् बालान् भ्रातृनिवहानिव पदयो-र्निपत्य वारयतः प्रतार्य, मध्येमार्गं मिलितान् बलादिवावरुन्धती नगान् विनिपात्य, करुणं रुदतीः पथि सङ्गताः सखीरिव स्रोतस्विनीरान्तरिक-भाववेदनेनेव कर्णयोः कस्यापि स्नेहाप्लुतस्य मनोभावस्य कथनेन प्रबोध्य, मातरमिवोपत्यकां पितरमिव च हिमभूधरं मनागप्यनापृच्छ्य च, दूरदेशचलनश्रममपि न गणयन्ती, प्रेमपूरमिव पयोराशिं प्रियतम-पार्श्वनिवेशनस्पृहयेव समेधयन्ती, तदङ्के निलीयापुनरुत्थानमिव कामयमा-

नोन्मादिनीवेयं धावति सागराभिमुखम् । बङ्गभूमिषु प्रवहन्त्या अप्यस दृष्टिर्न जात्वपि तदीये चारुत्वे आकृष्यते, मनः सलिलाहरणाय तटभु मुपागतानां विलासिनीनां गणेन सह न क्षणमालापसुखं समीहते, कि द्रुतपदन्यासमग्रेसरत्येवैषा । सत्यं, स्नेहोन्मादो हि कर्त्तव्यानि, वि दान्, सानुभावं चापवारयति । ईदृशी ह्यस्याः स्नेहकथा ।

अन्योऽपि प्रकारोस्त्यस्याः स्वरूपविषये चिन्तनस्य । तथ दृश्यताम्—प्रयागे धर्मेण सहैवार्थस्यापि प्रयोजनं प्रतीयतीयं व्याप विशेषस्थलानि स्वप्रवाहेण समृद्धिशालीनि कुरुते, राजकीयशासनं दृढं विधातुं राजधानीनगराणां गौरवमिवोदञ्चयितुं च तदीयपरि स्वप्रवाहेण पावयति ।

धार्मिकजनतायाः सत्योऽयं विश्वासो यद् यथा नो जननी जना योगक्षेमं चिन्तयति, तथैव गङ्गापि सर्वथा कुशलमनुसन्धत्तेऽमृतस्वा पयः पाययते, सति च क्लेशे समुपाहरति तदुपासनसाधनानि, जाते तु शरीरोपनिपातेऽमरभावं प्रयच्छति । किमितोऽप्यधिकं दयते कस्या कापि जननी ?

ईदृशी चेयं महापुण्या, यदङ्के निपतिततनवः पापा अपि स्पृहयन्ते न्द्रपदाय, लभन्ते च तत्, अत एव चैतस्या भक्तस्य महतीयं चिन्ता—

> ‘कत्यक्षीणि, करोटयः कति, कति द्वीपिद्विपानां त्वचः,
> सारङ्गाः कति, पन्नगाः कति, सुधाधाम्नश्च खण्डाः कति ।
> किञ्च त्वञ्च कति, त्रिलोकजननि, त्वद्वारिपूरोदरे
> मज्जज्जन्तुकदम्बकं समुदयत्येकैकमादाय यत्’ ॥

न च केवलं भक्तिभाजनानामेवैतादृशो विश्वासः, परं वज्रनास्तिक भक्तिशून्या अपि अस्याः पयसि महान्तं गुणराशिमुत्प्रेक्षमाण आर्याणामेतदादरणं सकारणमङ्गीकुर्वते, तथाहि यत्रान्यत् पयः पञ्चषै रेवाहोभिः (प्रवाहात् पृथक्कृत्य स्थापने) कीटदूषितमकार्यकं सम्प द्यते, तत्रास्या भागीरथ्या जले मासषट्केनापि नागच्छति विकारः, किञ्च पाचने पावने च समानमविकारमादधातीदमिति प्रतीत्यैव

हिन्दव उद्घोषयन्ति—'औषधं जाह्नवीतोयाम्' इति तदागच्छत, वयमपि समवेताः प्रार्थयेमहि—

'त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः' इति।

## १४. मिथिला

बहूनि हायनानि जातानि क्वचिद् व्याकरणग्रन्थे मुदितसंक्षिषि मथ्यन्तेऽस्यां रिपव' इति 'मिथिला'। दृष्ट्वा चेदं विचारयितुं प्रारप्सि ायः कस्यापि कटूक्तिप्रयोगव्यसनिनः स्वदेशमेवमेव प्रशंसतो वाग्- वेलसितमिदमिति। परं क्रमशश्चिन्तासन्तानमायम्य प्राचीनमिति त्तसारमालोचयतो मम चक्षुषी कर्पूरशलाकया, स्निग्धहिमवर्त्तिकये ोन्मोचिते। पश्यत भवन्तोऽपि महिमानमस्याः—पुरा हीयमेकतो जन- स्य ज्ञानवैभवनिधेरङ्के बालोचिताभिः क्रीडाभिरानन्दन्तीं जगन्मातरं ीतामुपस्थाप्य सङ्कशो भुवं पालयतां राज्ञां शिरांसि बलादिव नम- न्ती स्वशासितुरुत्कर्षं प्रकटीचकार, ततश्च परतो भगवतो रामचन्द्र- य तस्य प्रणयतरोरुद्गमस्य भूमिभावमभजद्येनान्तर्ज्वलता प्रकाशित- कलधूमभ्रमहृद्भागोऽसौ मर्यादापुरुषोत्तमो दाशरथिर्जायमानेऽपि ार्मिकप्रतिबन्धे स्वस्याः प्रेयस्याः प्रतिकृतिमपि द्वितीयस्याः सुन्दर्या पेक्षया साधीयसीं मन्यमानः कवये निम्नलिखितश्लोकस्य भाव- ुपाहरत्—

'सीतां हित्वा रघुकुलपतिर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार।
वृत्तान्तेन श्रवणकुहरव्यापिना तेन सीता
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे।'

राज्ञा भर्त्राऽपराधमविचार्यैव पृथक्कृताया अपि तं प्रति—

'भूयो यथा मे जननान्तरेऽपि त्वमेव भर्त्ता न च विप्रयोगः' इति ाश्रु सन्दिशन्त्याः स्वसुतायाः सीताया मातृभावेनोन्नतमिदमीयं

शिरः। आस्तामयं पुरातनः प्रसङ्गः, अस्मिन्नपि युगहतकेऽस्याः क्रोडे तादृशमेकमनर्घं रत्नमपत्यं प्रकटतिस्म श्रीमती भारती देवी, या मीमांसामांसलमतौ विश्वविदितवैदुष्ये स्वपतौ मण्डलमिश्रे समग्रामपि महीं शास्त्रार्थे विजित्य मिथिलामुपसेदुषा श्रीयुतशङ्करभगवत्पादेन शास्त्रार्थसंगरायाहूयमाने परम्परोपमेयपाण्डित्ययोरनयोः प्रवृत्तिनिवृत्तिमार्गव्यस्थापनप्रवृत्तयोः केन माध्यस्थ्यमाश्रीयतामिति चिन्त्यमाने सर्वसम्मत्या समर्प्यमाणां मध्यस्थतां तथा निरवीवहद्यथाद्यापि सादरं स्मर्यते तदीयस्तद्विषयो निर्णयः। लखिमायाः सरसं पाण्डित्यम् चन्द्रकलायाश्चमत्कारि कवित्वञ्चास्या गौरवं समेधयति। अन्यत दृश्यताम्—

इयं हि जगती जातायामपि सर्वविधायां सुविधायां, लब्धायामपि भौतिक्यां सिद्धौ बिना येनान्धेव प्रतीयेत, यदन्तरा तमसीव लीना मन्येत, यदभावे कस्यापि पदार्थस्य क्षोदक्षमं तत्त्वं निर्णेतुं न शक्नुयात्, यावद्बिना पुरुषार्थसार्थस्वरूपमपि न परिचिनुयात्तस्य प्रमाणशास्त्रस्य प्राथमिकः प्रभवोऽस्यामेव भुव्याविरभूत्, तदाद्यप्रकाशको गौतमोऽस्या एव भूमीतलललामभूतायास्तपस्विन्याः स्नेहलालितस्तनय आसीत्, परतोऽपि यथोपयुक्तपरिष्कारेण तदुद्भावितं तन्त्ररत्नं परिमार्जयितुमासादितावतारो गंगेशोऽस्यैव धराखण्डस्य धूलिषु चिक्रीड। विधिबोधनोद्धुरमनीषाणां मीमांसकनामेकमात्रमुद्भवभूमिरियमिति यावद्ब्रुवे तावदागच्छति स्मृतिवर्त्म पुराणोऽसौ हरिसिंहदेवस्य यज्ञसमारोहो यत्र केवलं मैथिलमीमांसकानां चतुर्दशशती सहैव निमन्त्रिता सत्युपस्थिताऽऽसीत्।

मन्त्रतन्त्रविद्यायाः समुद्गममहीयमिति च प्रतिपन्नमेव प्रायः सर्वैः, तथाहि स्मर्यते—

'मन्त्रं तन्त्रमुपासते कतिपये सिद्धिः परन्त्वेतयो-
राश्चर्यं खलु मैथिलेषु वसति प्रत्यक्षवद् भूतले'

अयमेवासौ भूमिभागो यद्रजस्सु न्यायेन समं मन्त्रविद्या, मीमां-

सया सहागमतन्त्रं, व्याकरणेन समं धर्मशास्त्ररहस्यम्, गणितज्ञतया सार्द्धमदभ्रं दैवज्ञत्वं, काव्यकलया सहितोऽलङ्कारमहाराशिः, तपसा सह राजभावः, राजत्वेन समं योगविद्या, योगविद्यया सार्द्धमबाधप्रसरा त्रयी, मल्लशालया सह पाठशाला, त्यागेन सहोपभोगः, उपभोगेन सहातिथिव्रतभावः, कर्मणा सह संन्यासः, वीर्येण सहित शान्तिः, दानेन युक्ता अनात्मश्लाघिता च चिरात् क्रीडति।

मिथिलाया अस्या एव प्राङ्गणे समयकृतेन पौर्वापर्येण प्राच्यतां प्राप्नुवन्तोऽपि जगदुपकृतौ नित्यनूतनास्ते ते विद्वांसो निजां जीवनलीलां प्राचकटन्, ये षड्दर्शनानि व्याख्यायापि न जातुचिदकत्थन्त, गृहपरिसरप्ररूढं शाकमभ्यवहरन्तोऽपि अयाचितोपनताय सुखजीविकोपयुक्तायानतिनिन्द्यपात्रोपहृतायापि धनाय नास्पृहयन्।

इयमेव तद्देशरत्नं यत्र जनानां कुलाभिमानस्तावतीमतिभूमिमुपगतो, यया जात्वपि नीतिपथाद् न च्यवन्ते लोकाः, धार्मिकमर्यादारक्षणमात्मनः कर्त्तव्यं प्रतियन्तो निजामार्थिकीं क्षतिमपि सहन्ते, दैवे पित्र्ये च कर्मणि ससमुत्साहं प्रवर्त्तन्ते, दृष्टमात्रा एव निजेन वेशविशेषेण स्वजातिपरिचयं ददते।

भौगोलिकं सौन्दर्यन्तु मिथिलायाः प्रकृतिदेव्या रङ्गभूमेरिव प्रकामरमणीयमिति को नाम सचेतनो नाङ्गीकुर्यात्, अस्या एकतो वर्त्तमाना हिममयशैलपरम्परा प्राकृतिकोपद्रवप्रतिबन्धार्गलेव, सौन्दर्यलक्ष्म्याः सुखशयनीयोपधानमिव, तद्दिगवच्छेदेन प्रचुरप्ररूढानां नानाविधलतातरुगुल्मादिभावेन स्थितानां महौषधीनां रक्षणार्थमुपकल्पिता वेष्टनभित्तिरिव विद्योतमाना दृश्यते, अन्यतश्च 'नारायणी, शालग्रामी' प्रभृतीनि धन्याक्षराण्यभिधानानि धारयन्ती पुण्यप्रवाहा ह्लादिनी बलादिव प्रह्लादयति चेतः, दक्षिणदिशि दिशः स्वकीर्त्त्या धवलयन्ती निजपावनगुणगणगौरवेणेव देवैरप्याद्रियमाणतया स्वर्धुनीति समाख्यां दधाना भगवती भागीरथी भूषयति भागशोऽस्या वपुः, प्राच्यां नःपुनःप्रसह्य तपः-प्रभावेण तनावेकस्यामेव क्षत्रियतां क्षालयित्वा ब्राह्म-

णत्वमपि निवासितवतः कुशिकनन्दनस्य तपःसम्पादिव शतधारतया प्रसृता कौशिकी प्रवहति, मध्ये चामृतजला अमृता, कमला-वाग्मती-प्रभृतयो नद्यः स्यन्दन्ते यत्प्रभावेण क्रुद्धेपि देवेऽशुष्कसस्यत्वमुपेत्य प्रसीदन्ति मिथिलाभिजनाः।

तानि तानि जनकपुर-कुशेश्वर-भैरव-कपिलेश्वर-प्रभृतितीर्थस्थानानि तु न गणयामि, स्वत एव मिथिलायास्तीर्थतया प्रसिद्धेः।

बङ्गसङ्गतसीमतया सकलामपि कामकलां कटाक्षेष्वेव निधाय जगद्व-शीकारप्रवृत्ता विश्वमोहनसौन्दर्यसारसम्भृता रमण्योऽत्र वसन्ति, तदुप-श्लोकितमेव—…'जनकजनपदस्थायिनीनां कटाक्षे,

……स्फुरति रतिपतिः……।

अधुनापि—यत्र युगे आस्तिक्यं वञ्चनेति निन्द्यते, धर्मश्रद्धा बुद्धि-वैधुर्यमित्युपहस्यते, इह हि मिथिलायां स्नातानुलिप्ता ब्राह्मणाः पूर्वाह्णे भगवन्तं विष्णुं शिवञ्च समर्चन्तो यथोपमोगमृचश्चोच्चारयन्तो यं भावमा-विर्भावयन्ति, न स परत्र भूभागे लभ्यः, सुरभारत्या अस्मिन् ह्राससम-येऽपि येन बहुमानेनेह लोकास्तामभ्यस्यन्ति न तदुपमा परत्र प्राप्या, अल्पमात्रेऽपि च वित्ते यादृश्यतिथिसेवाभावनाऽत्र दृश्यते न तत्सादृश्य-मपरत्र समधिगम्यम्।

अमितगुणतयैव चेमां प्रकृतिनटीक्रीडास्थलीं, विश्वगुणादर्शप्रति-च्छविं मन्यन्ते विज्ञास्तथा चाहुः—

'देशाः सन्तु सहस्रशोपि मम तु स्वाभविकप्रीतये
श्रेयान् देशविशेष एष मिथिलानामा क्षमामण्डले' इति,
'भूदेवो यत्र देवो यजनवसुमती सास्ति मे तीरभुक्तिः'

तीरेषु हुतिः—हवनं यत्रेति विगृह्य 'तीरहुति' शब्दं 'मिथिला' पर्यायं साधयन्तोऽपि वैयाकरणा अस्य भूभागस्य याज्ञिकदेशत्वे साक्षिणः। सदयं देशो भाविष्वपि जननेषु जायतां जन्मभूमिर्ममेति विश्वेशमर्थये।

## द्वितीयपल्लवोपसंहारः

आदर्शप्रबन्धानां प्रकरणमत्र समाप्यत इति किञ्चित् कथनमवसराशालि, यद्यन्येपि विषयाः प्रबन्धस्य भवितुमर्हन्ति—राजनीतिः समाजनीतिः, जीवनी, ऐतिहासिकघटनाविशेषाः, इत्यादयस्तथापि ते नात्रोपनिबद्धाः सम्प्रति यावत्तेषामनतिप्रचलितत्वात् प्रोदीरितप्रकारेण कृतप्रबन्धलेखाभ्यासैश्छात्रैः कुत्रापि विषये प्रबन्धस्य लिखितुं शक्यत्वाच्च।

ऐतिहासिकीं 'जीवनी' मधिकृत्य प्रबन्धमारचयद्भिर्यथोपयोगं घटनायास्तिथ्यादिकमपि समुपनिबन्धनीयम्।

आदर्शो न समग्रो भवति, न वा भाव्यमपि तेन।<br>
तथा, तथा सति लोका अलसमतित्वेन युज्येरन्॥<br>
यावद्विना विबोधा न भवति शक्तेः प्रसुप्तायाः।<br>
छात्राणां, तावदिह न्यबन्धि यत्नेन नूत्नेन॥<br>
इत्थं प्रकारभेदे दृष्टे जाते च हृदयस्थे।<br>
अत्र प्रबन्धवर्त्मनि सुखं पदानि प्रसर्पन्ति॥



# तृतीयः पल्लवः

## पत्र–लेखन–प्रकारः

आधुनिकशिक्षाप्रकारे पत्रलेखप्रकारस्य प्रबन्धलेखस्येवोपयोग शालिता दृश्यते, प्रायो हि परीक्षणसंस्थाः प्रबन्धप्रातिनिध्येन स्वतन्त्र रूपेण वा पत्रलेखनविषयेऽपि प्रश्नान् दापयन्ति, न केवलमेतावदेव किन्तु लौकिकजीवने प्रबन्धापेक्षयाऽपि पत्रलेखनकलाया ज्ञानस्य महत्त्वमधिकमनुभूयते, तथाहि—प्रबन्धलेखनमधिकतः परीक्षासु सफलतायां प्रयोजकं जायते, क्वचिदध्यापनकाले वैदुष्यं प्रकटयति, ग्रन्थलेखे स्फुटलेखे वा चमत्कारमाधायोपकरोति पत्रलेखकौशलं तु विदेशगायापि जनाय तमानन्दं वितरति यः केनाप्यन्येन साधनेन न जनयितुं शक्यः, स्वलेखाय समये समये स्वगुणेन वाचकं प्रसाद्य सत्यपि परिचयाभावे प्रभूतवेतनं पदं दापयति, प्रणयिनोः पारस्परिके पत्रव्यवहारे प्रदर्श्य- माना पत्रलेखकला यं नूतनं संसारं सृजति न स वाचा प्रकाशयितुं शक्यः, एवमन्येष्वपि क्षेत्रेषु व्यवसायादिषु पत्रव्यवहारमात्रमुपजीव्य प्रवर्त्तमानेष्वस्य गुणस्यास्ति महानादरः, न चायं गुणः सुलभः, सत्यपि शास्त्रीये ज्ञाने, ग्रन्थग्रन्थिभेदने पाटवे वाऽत्र विषये दुर्बलतायाः स्फुटमुप- लम्भात्, अतः सम्प्रति प्रबन्धपारिजातेऽत्र प्रकरणमिदं 'पत्रलेखनप्रक- रण'मिति नाम्नोपबृंहयन् न विषयादन्यत्र गतत्वेन गणनीयोऽस्मि विद्यार्थिबन्धुभिरध्यापकमहोदयैश्चेह विषयेऽपि समये समये ध्यानमाधेयं येन सर्वाङ्गीणताऽध्ययनस्य जायेत। तत्र प्रथमं निम्नलिखितेषु साधा- रणनियमेषु दृष्टिपातः कर्त्तव्यः। यथा—

१—पत्रलेखनकाले लेखकेन मनसि करणीयं यदस्मै पत्रं लिख्यते, तेन सह वार्तालाप इव क्रियतेऽर्थाद्यथा वार्त्तालापे स्फुटा शब्दावली प्रयुज्यते तथैव तत्रापि प्रयुज्येत, (नतु स्वपाण्डित्यप्रकटनाय गभि-

नि दीर्घसमासानि च वाक्यानि प्रयुज्येरन् येषु प्रयुज्यमानेषु पञ्च-
त्वः पठितस्यापि पत्रस्य तात्पर्यं हृदयङ्गमं न जायेत )।

२—यं विषयमुद्दिश्य पत्रं प्रहीयते यथासम्भवं स्पष्टतया तस्य
देशः करणीयो येन वाचयिता तद्विषयेऽसन्दिग्धाऽविपर्यस्तानुभव-
जनं भवेत्।

३—शिष्टाचारपरिप्राप्तं नत्याशीर्वादात्मकं मुखबन्धनं संक्षिप्य
ष्टञ्च लेख्यम्, तत्र विशेषणादियोजनेन वाक्यविस्तरे विधीयमाने
रस्योद्देश्यं पश्चात्पदमिव कृतं भवति। (इदं च व्यक्तिगतपत्रविष-
" कार्यालयीयपत्रेषु तु नत्यादिनिर्देशो नैव क्रियते।)

४—पत्रं यथासम्भवं लघुकायं यथा स्यादर्थश्च बुबोधयिषितो न
त तथा चेष्टनीयं, सति चात्र साफल्ये पत्रकला फलशालिनी
ते।

५—यदि किमपि प्रार्थनीयं स्यात्तदा तद्विषये समुपयुज्यमानैः
वशालिभिश्च शब्दस्तोमैः सकृदेव तस्य निर्देशः कर्त्तव्यः, नतु स्व-
ग्रतासूचनाय भूयो भूयस्तदावर्त्तनीयं जातेऽपि शब्दभेदेऽर्थभेदनिव-
दोषस्य दुरुद्धरत्वात्।

६—कार्यालयीयपत्रेषु सति प्राक्तनपत्रगतविषयस्य स्मरणीयत्वे
पत्रतिथिसङ्ख्यादिकमवश्यमुल्लेख्यं यत्साहाय्येन तदीयविषयाव-
बो विधीयते।

७—यस्य समीपे पत्रं प्रेष्यते तदीयस्थितिसङ्केतादिकमपि अन्यू-
नाधिकमेव निर्देश्यं, वृथा प्रान्तमण्डलोपमण्डलगुल्मपल्लिप्रभृतीनां
देशो नापेक्ष्यते (यावदवश्यमपेक्षितं तावत्तु निर्देश्यमेव, तत्र किमा-
श्यकं किंच नावश्यकमस्यार्थस्य निर्णये व्यवहार एकं प्रमाणम्।)

सामान्यतः पत्रं त्रिप्रकारकं भवति, यद्यथा—अतिव्यक्तिगतम्,
यक्तिगतम्, कार्यापेक्षितं च।

(१) अतिव्यक्तिगतं तत्पत्रमुच्यते, यत्पिता पुत्राय, पुत्रो वा पित्रे,

प्रिया प्रियतमाय स वा तस्यै, एवमेवातिनिकटसम्बन्धी कस्मैचित्तादृशायैव जनाय प्रेषयति। अस्मिन् पत्रे प्रेषयिता स्वसंकेतादिकं जाते नूतने परिवर्त्तन एव निवध्नीयान्न साधारणस्थितौ ( विस्तरं, व्यग्रतादिकमीषदंशे पुनरुक्तिं केषांचिन्नियमानां व्यतिक्रममपि च कुर्वन् प्रेषकोऽत्र क्षम्यते, परं सति सम्भवेऽत्रापि प्रोक्तनियमानामनुवर्त्तनमेव हितम्। )

( २ ) व्यक्तिगतपत्रेषु सम्बोध्यमानव्यक्तिविशेषस्य तथा निर्देशो विधेयो यथा तत्पत्रं तदीयमेवेति भासेत [ यथा मण्डलाधीशं देवदत्तमिश्रं प्रति प्रहीयमाणे पत्रे प्रियश्रीयुत पं० देवदत्तमिश्र, एवं सम्बोधनं विधेयं नतु मण्डलाधीशत्वादि योजनीयम्। ]

( ३ ) एतज्जातीयकपत्रेषु स्वनाम निर्दिश्य स्वपरिचयोऽपि प्रदेयो भवति, सम्बोध्यमानस्य महाशयस्य परिचयादिकं तु सम्प्रति स्थितिसङ्केतलेखनस्थल एव निर्दिश्यत इति व्यवहारः।

( ४ ) कार्यापेक्षितपत्रेषु सम्बोध्यमानस्य पदादिकं तत्पदबोधकविशेषणादिपुरस्कारेण प्रयोज्यं स्वं पदादिकं तु नीचैः प्रयुज्यते, क्वचित् स्वीय एव परिचयः शीर्षस्थले विन्यस्यमानो दृश्यते, व्यवहार एवात्र प्रमाणमित्युभयमपि साध्वेव।

इतोऽतिरिक्ता लेखमात्रगता नियमा अवश्यमनुरोध्याः, अतिसाधारणनियमानुवर्त्तन एव पत्रं चमत्कृतिशालि जायते, तदपि न कृतं चेद् हन्त! श्रीशब्दादिप्रयोगविषये ये नियमाः पुरा व्यवह्रियन्तेस्म ते गतकालाः, सम्प्रति एवमेव श्रीपदं सर्वत्र प्रयुज्यते। बुद्धिमन्तो दैनन्दिने व्यवहार एव दत्तावधाना विषयेऽस्मिन् वास्तविकं ज्ञानं लब्धुमीशत इति नह प्रतन्यते।

## ( १ ) पितुः समीपे पुत्रस्य पत्रम् ।

कल्याणपुरतः
५–१०–४५

स्वस्ति,

श्रद्धेयपादकमलेषु शतं प्रणतयो निवेदनञ्च ।

भवदीयं पत्रं यथासमयमापम्, यथाश्रीमदादेशमहमस्मिन् पूजावकाशे श्रीमदन्तिक एव स्थातुमिच्छामि, मदीयो विद्यालयः १०–१०–४५ तिथेः पिधास्यमान आसीत्, परं मण्डलाधीशमहोदयानां शुभागममुपलक्ष्य दिनस्यैकस्यावकाशो जात इति सम्प्रति ९–१० तिथेरेवावकाशः प्रारब्धः, न चात्र किमपि प्रतिबन्धकमुत्प्रेक्ष इति ८–१० तिथौ सायं षड्वादन इतः प्रस्थाय नववादने निशि धूमयानस्थितिस्थाने समुपस्थास्यन् तत्र समये स्थाने च श्रीमता प्रेष्यमाणं यानमाशासे अन्यत्सर्वं कुशलम् । श्रीमत्या मातुश्चरणयोः प्रणतिर्मम कथनीया ।

भवदीयस्नेहदुर्ललितः—
श्रीराधामोहनः

## ( २ ) पुत्रस्य समीपे पितुः पत्रम् ।

पकड़ीतः
१६–९–४४

स्वस्ति,

प्रियवत्स श्रीकान्त ! शतं शुभानि भूयासुः ।

तव गृहात् प्रस्थितस्य पञ्चदश दिवसा अजायन्त, विद्यालयमुपेतमात्रेण च त्वया पत्रदानं प्रतिज्ञातं, नाधुनावधि तदधिगतं तेन वयं चिन्ताग्रस्ताः, त्वदीया माता तु भृशमुदास्ते । विद्यालये प्रवेशः, छात्रा-

वासे स्थानलाभश्च जातो न वेत्यपि न ज्ञायते, प्रथम एव च तव परदेशनिर्गम इति चिन्ताया निदानं नः। विद्यालये पाठारम्भो जात: अपि प्रसीदसि तत्रत्ये वातावरणे ? श्रीराधारमणोपि कदापि दृश्यते सर्वमिदं त्वरया सूचनीयम्, तव सखा देवदासः कृष्णा च त्वां स ऽनुस्मरतः। शुभमिति।

त्वदीयशुभानुध्य

ताराकान्त

## ( ३ ) मित्रस्य पत्रं मित्रं प्रति।

मोतीपुर

१५-१२-

प्रिय श्रीदेवनन्दन !

अकस्मान्मन्थरज्वरेणाभिभूतेन भ्रातृवरेण तडित्पत्रद्वाराऽऽहूतो विस्मृतान्यकरणीयस्तामेव दिशं प्रचलित इति न त्वमापृष्टोऽपि। अ: गत्यापि तदीयया व्यग्रतया मयाऽपि शून्यशून्या इव दिशोऽदृश्यन्तेति पत्रमपि प्रहितं तदिदं सर्वमपि परिस्थितिपारतन्त्र्यकृतं ममागः सं मर्हसि। परमात्मप्रेरणया सम्प्रति रोगस्य तस्य भयङ्करता दूरापसृ केवलं समयोऽतिवाहनीयो विद्यते। जाते च तस्य पथ्ये तं तदीयं परिवारमहमितो निजं ग्रामं नेतुमीहे, न शक्नोमि चैकाकी कार्यमि मस्मिन् दुःसमये समनुष्ठातुमिति त्वामपि तत्र सहायमाशंसामि। नि स्वीकृतिरत्र प्रहेया।

विद्यालये रसायनशिक्षकाय समर्प्यमाणं मदीयमभ्यासपुस्तकं त आदाय त्वया स्वसमीपेऽवस्थापनीयं छात्रावासद्वारपालाय च रूप्यकमे प्रदेयम्, अभिधेयं मम नाम गृहीत्वासौ ददातीति। शमिति।

त्वदीय ए

रामानन्द

## ( ४ ) पूर्वपत्रस्योत्तरम् ।

कनखल
११. रामदीनच्छात्रावासतः
१४–११–४४

बन्धुवर,

तवाकस्मादनुपस्थितिर्यावन्मां गभीरे चिन्ताकूपे पातयति तावदेव त्वदावासमुपेतस्य मम दृष्टिस्तत्रास्तव्यस्ताखिलपदार्थे स्थाने वायुवशादितस्ततो लुठति तस्मिन्नेव तडित्पत्रे न्यपतद्यदनुसृत्य त्वया तावत्या त्वरया विश्वविद्यालयाच्चलितम् । अवगतस्तदैवाखिलोऽपि समाचारः, सम्प्रति पत्रेणानेन तु सर्वथैव गतचिन्तोऽजनिषि । भगवानाशु तव भ्रातृवरं सर्वथा नीरुजं क्रियात् । यदि परिस्थितिर्मे प्रतिवर्त्स्यत्स्यादवश्यमहं त्वां त्वदादिष्टेन प्रकारेण सहायकेन सम्भावयिष्यामि । तव पूज्याया मातुः स्नेहप्रतिकृतेर्भ्रातृजायायाश्चैवं दर्शनमपि कृतं भविष्यतीत्यपरमपि प्रलोभनमत्र पश्यामि ।

कल्याणिनी रमाऽपि सम्प्रति कनखलमायातास्ति, साऽपि त्वद्गृहं गत्वा तव मातरं द्रष्टुं तस्याः प्रसादं लब्धुञ्चेच्छति, यदि सापि सह तिष्ठेत्तदा त्वतीव सुखावहा यात्रा जायेत, पथि प्रबन्धो हि तया विधीयमानः प्रायः सर्वैः प्रशस्यते । अवशिष्टं कुशलमवगच्छ । इति ।

त्वदीयः—
देवनन्दनः

## ( ५ ) व्यक्तिगतं पत्रम् ।

कामना–निवासः
२० कुशेपुरतः
१२–८–४८

प्रिय श्रीयुत राधाकृष्णशर्मन् !

भवदीये विद्यालयेऽहं स्वं तनयं प्रविवेशयिषामीति पत्रमिदं प्रहित्य भवन्तमुपप्लुतशान्तिं करोमि, क्षन्तव्यम् ।

मदीयः पुत्रः १५ पञ्चदशवर्षदेशीयोऽधीतसमग्रप्रवेशपरीक्षाग्रन्थोऽस्ति, 'तस्य नामलेखनादिकर्मणि किञ्चिमावश्यकं भविष्यति' ?

भवदीये विद्यालये छात्रावासोऽस्ति न वा ? अस्ति चेत् कस्तत्र प्रवेशस्य नियमसमुदयः ? तत्र प्रविष्टवतश्च छात्रस्य सत्यामिच्छायां मध्येऽध्ययनं नाम किमादाय च्छिद्यते ? भवदीये विद्यालये कोऽधुना प्रधानाध्यापकः ? प्रधानच्छात्रावासाध्यक्षश्च कः ?

तत्र विद्यालये भवानेव मया परिचीयत इति भवत्येव मया भारोऽयमारोपितः । आशासे नानुध्यायेत भवतेदम् ।

भवदीयः

प्रियव्रतचौध[illegible]

## ( ६ ) व्यक्तिगतं प्रार्थनापत्रम् ।

श्रीमन्तो माननीयाः 'पटना' मण्डलाधीशमहोदयाः,

तत्र भवतां सेवायां सविनयं निवेदनं यदहं भवदीयामुदारतां विद्यार्थिजनसहायताविधानव्रतधारितां च विश्वस्तसूत्रेणावगत्य स्वविष[illegible] किमपि निवेदयितुं प्रवर्ते, भवान् यस्य मण्डलस्य प्ररोहस्तमेव भूभागमह[illegible]मपि जन्मभूमिमभिमन्ये इति द्वितीयो हेतुरत्र मम साहसे ।

अहमत्र पटनानगरे प्रतिष्ठिते त्रिस्कन्धज्यौतिषमहाविद्यालये द्वितीय वर्गे पठामि, यदीयां सहायतामाधारीकृत्याहमिहायातस्तस्य महापुरुषस्या[illegible]कस्मिकेन निधनेन प्रतिहन्यत इव मम पुरस्सरणस्यावसरः, न चोचित[illegible]मिदं यदहमिह मार्गमध्य एव विरमेयम् । न वाऽयं भवादृशमुदारहृदयं सहाय मतस्ततश्चक्षुषी व्यापार्याप्युपलभे तदर्हति भवान् मदीयामार्थिकीं सहायतां समुपपाद्य मामुपकर्तुम्, अत्रान्यत्र वा मद्विषये विशेषे जिज्ञासिते श्रीमान् प्रधानाध्यक्षो मद्विद्यालयस्य शक्यतेऽनुयोक्तुम् ।

द्वितीयवर्गः
त्रिस्कन्धज्यौषिमहाविद्यालयः,
पटना ।

अहमस्मि भवदीयां
सहाययाप्रसूतां भुज्च्छायां लिप्सुः
सीतारामवर्मा
१२-१-४५

## ( ७ ) व्यक्तिगतं पत्रम् ।

कटरा कैम्प
पो० बेनियां, सारन
१५-१-४५

मान्य; श्रीमन् उपमण्डलेश्वरमहोदयः ( सिवान )

ाशय,

अहमत्र भूभागे वर्णाश्रमधर्मस्य प्रचारार्थं भ्राम्यामि, तत्र प्रसङ्गे च
ाऽस्य मासस्य प्रारम्भतः प्रायश आसन्नविंशा ग्रामा दृष्टाः, न चैक-
त्रापि ग्रामे 'मलेरिया'-कृत उपद्रवो नालोकितः, यत्र यत्राहं गत-
त्र तत्र सर्वत्र लोका ज्वरेण नूतनेन पुराणेन च पीडिता एवादृश्य-
, प्लीहाभिवृद्धया च सन्दिह्यमानजीवना जनाः समुपयुक्तस्य सहाय-
य वैद्यस्यौषधस्य चाभावेन विपद्यमाना दृश्यन्ते चाहरहः, न च
यतेऽयं क्रमः, विधातुर्हि सर्वोत्तमा सृष्टिर्मनुष्यजातिरेवं क्लेशं सहेत ।
ं च तत्क्लेशापतिता मानवा निभृतमवतिष्ठेरन्नसम्भवमिदम् । यापि
ायता राजप्रदत्तद्रव्येण समुपस्थाप्यते सा द्विदले लवणस्यापि मात्रां
ारयति तत्रापि द्रव्यं यावदुपयुज्यते तथा मनो नाधीयते, लोकाः
ेक्षणं भाविने उपद्रवाय दत्तावसरा यैरद्य मिलन्ति तानेव श्वो वियो-
माणान् प्रतियन्ति, पत्नी प्रियपतिं, पतिः प्रियतमां, माता सुतं च
ा विपत्तौ पतितानिवोत्प्रेक्षन्ते, कस्यापि कुत्रापि कर्मणि न सभिनि-
ा प्रवृत्तिरालोक्यते । चिराय वर्त्तमानायामीदृश्यां स्थितावस्य प्रान्तस्य
यादिकं गतकर्मं सद्युगस्यैकस्य कृतेऽत्र दुर्भिक्षमधिवासयेत्, सति च
ाभावे योऽधुना मानवजातेरपमानविशेषो दृश्यते, तस्य यात्रा कतमां
र्मात्रामुपाञ्छेत् ? अलमिदं सूचयित्वा ।

अतः प्रार्थये श्रीमतोऽत्र विषये ध्यानं दातुम्, मदीये विचारे प्रति-
मपञ्चकं क्वचिदुत्तमे स्थाने एकम् उपद्रवनिरोधकेन्द्रं समुद्घाट्येत,
ा चत्वारो जना नियुज्येरन् । तेषु च—

१—एको वैद्यो यो भ्रान्त्वा रोगिणः पश्येत्, तत्पत्रं तेभ्यो दद्यात् यदादाय तैस्ततः केन्द्रादौषधमवाप्येत।

२—सहायकवैद्यो यः केन्द्रे स्थित्वाऽऽगतानां पत्रवाहानां रोगिणां भेषजप्रदानेन सूचीव्यधादिना च सेवां कुर्यात्।

३—प्रचारवैद्यो यो भ्राम्यन् रोगादस्मादात्मानं गोपयितुं प्रकारं शिक्षयेल्लोकान्।

४—अत्रैव कष्टे सर्वथा विपन्नतां गतेभ्यो जनेभ्य आर्थिकीं सहायतां दातुं लोकानां समीपतो धनसङ्ग्रहं तद्वितरणं च कर्त्तुं नियोक्तव्यो जनः। चत्वारोऽप्यमी वेतनभोगिनः स्युः।

एवं व्यवस्थितानां केन्द्राणां निरीक्षणायापि द्वौ योग्यौ विश्वस्तौ च पुरुषौ नियुज्येयाताम्। एवं यथामति मया सूचितं, सूचितमत्र विधातुं प्रभवो भवन्तः। आशासे मदीया प्रार्थना क्लेशप्रदा न मन्येत। शमिति।

प्रचारकः
वर्णाश्रमस्वराज्यसङ्घः, काशी।

भवदीयः
कृपाशङ्करसामव्रती

## (८) कार्यापेक्षितम्।

श्रीमन्तः प्राधानाध्यापकमहोदयाः,

(शेखावतसंस्कृतमहाविद्यालयः, झांसी)

महाशयाः,

भवदीये महाविद्यालये नव्यन्यायकक्षायामहमध्येतुमीहे, प्रवेशिकापरीक्षा च मयोत्तीर्णा, अतः प्रार्थये श्रीमतो यथोचितमादेष्टुम्। प्रवेशिकापरीक्षायाः प्रमाणिता लब्धाङ्काः परिवर्त्तनप्रमाणपत्री च सहोपह्रियन्ते, इति।

कोठिया
पो० रीगा
जिला-मुजफ्फरपुर

भवदीयः
रामप्रसन्नशर्मा
१२-९-४५

## ( ९ ) कार्यापेक्षिपत्रम्।

श्रीमन्तो विहारसंस्कृतसमिति–शिक्षानिरीक्षकमहाशयाः ( पटना )

मान्यमहोदयाः,

भवदीया परीक्षणसंस्था प्रत्यब्दवदस्मिन्नपि वर्षे संस्कृतपरीक्षार्थमावेदनपत्रस्यान्तिमं दिनम् ३०।११।४५। निश्चितवती, ततः परमावेदयिता यथानियमं दण्डं दत्त्वैवावेदनं समर्पयितुं प्रभवेत्। अत्र किमपि वक्तव्यमस्ति–'भवदीयसंस्कृतसमितेः परीक्षा प्रायोऽस्मिन्नपि वर्षे अप्रैलमास एव भविता। मध्ये, सार्द्धमासचतुष्टयात्मकः कालो विद्यते, दीर्घेऽस्मिन्नन्तराले नानाविधा नवीना आपदो भवितुं शक्नुवन्ति, यासां कृपया सम्प्रति कृतावेदना अपि च्छात्राः प्रत्यूहभाजो भवेयुः, संति चाग्रे प्रार्थनापत्रप्रदानसमये यैरधुनावधि सन्नाहो न कृतस्तेऽपि प्रयस्य सन्नह्य च सम्मिलिताः स्युः। किञ्च कस्यांचिदप्यन्यस्यां परीक्षायामियन्ति दिनानि पूर्वं प्रार्थनापत्राणि नाकार्यन्ते, भवानेवैकः स्वां समितिं न समयगामिनीं कर्तुं यतेत। अतः प्रार्थये श्रीमतो यदिमां भवन्तीमनुचितां हास्यकरां च कार्यवाहिकां प्रतिबन्धुमन्ततो भाविनः 'फरवरी' मासस्यान्तिमं दिनं यावत् प्रार्थनापत्राणि ग्रहीतुं च कौन्सिलसभया प्रस्तावमङ्गीकारयितुं यथा व्यवहर्तुं च दयन्तां भवन्त इति।

| मन्त्री<br>जिलाछात्रसंघः, गया। | भवदीयः<br>सत्यदेवमिश्रः<br>१।९।४४ |
|---|---|

## ( १० ) कार्यापेक्षिपत्रम्।

श्रीमन्त्रि-महोदय !

जिलाछात्रसंघः, ( गया )

महाशय !

भवदीयस्य १-९-४४ तिथेः पत्रस्य प्रसंगे सूचयामि यदहं विषय-

मिमं कौन्सिलसभायामुपस्थापयितुं प्रयतिताहे, सति चानुकूले निर्णये भाविवत्सरतस्तदनुसारेणाचरितुं च चेष्टिताहे। इति।

विहारसंस्कृतसमितिकार्यालयः भवदीयः

पटना + +

११।५।'४५ मन्त्री

एतावता निदर्शननिवहेन भवद्भिः पत्रलेखनप्रकारविषये सामान्यतः स्वरूपादिकमवगतं स्यात्, सति चैवंविधे सामान्यज्ञाने यथावसरं दृश्यमानस्य तस्य तस्य पत्रस्य स्वरूपेषु सतर्कां दृशमाधाय तदीयां तनुमेव मनसि व्यवस्थापयेदेवं कुर्वन् विद्यार्थी मासषट्केनात्र निपुणः स्यात् विषयमध्यापयन्तः शिक्षकमहोदया अपि यथासम्भवं तेष्वेव विषयेषु प्रथमं छात्रैरभ्यासं कारयेयुः येषां विषयाणां पत्रं ते लिखन्ति, यथा पितुर्भ्रातुर्वा समीपे पत्रम्, एवंविधे स्थले च जातेऽभ्यासे शिक्षयिष्यमाणप्रकारकम् एकम् आदर्शभूतं पत्रं स्वयं लिखित्वा छात्राणां सविधे निदध्युस्तदनुसारेण च्छात्रैरन्यत्र विषये पत्रं लेखयेयुश्च तैर्लिखितेषु पत्रेषु जाता असुद्धीः परिमार्ज्य बोधयेयुश्च। एवं जातेऽसकृदभ्यासे ज्ञानमिदं पक्वं स्यात्।

यद्यपि विषयेऽस्मिन् प्रभूतः परिचयोऽपेक्ष्यते यथा—

१—ऋणादानपत्रप्रकारः, २—विक्रयपत्रलेखनम्, ३—न्यासस्थापनम्, ४—अन्नदीयवस्तूनां भृतकतयां ग्रहणस्य व्यवस्थायाः पत्रम्, ५—न्यायालयाभियोगपत्रम्, ६—यात्रावृत्तान्तलेखनम्, ७—स्नेहपत्रम् इत्येतानपि विषयानधिकृत्य लिखितान्यादर्शपत्राण्यावश्यकानि सन्ति, परं यस्यां स्थितौ ग्रन्थोऽयं लिखितस्तस्यां यावदप्यपेक्षितं तावदत्र सन्न्यवीविशम्, विद्यार्थिभिरेतैर्लाभं विधायाहमुत्साहितश्चेत्तेष्वपि ध्यानं दाताहे।

# चतुर्थः पल्लवः

## सूक्तिरत्नमाला

इतः परं तानि तानि सूक्तिरत्नानि सङ्गृह्य समुद्ध्रियन्ते येषां भावान्मनसिकृतवतां जीवनमुन्नतं भवति, यानि केवलमभ्यस्तवतां वाणी चमत्कृतिमुपैति सकृच्छ्रुतवतामपि यानि कर्णरसायनतया मतानि भवन्ति। एतेषां समुद्धरणेन प्रबन्धतनुरलङ्कृता भवतीत्येवात्रैषां निबन्धे हेतुः। अकारादिक्रमेण चामीषामिह निर्देशः—

१ अतिदाक्षिण्य[1]-युक्तानां शङ्कितानां पदे पदे।
परापवादभीरूणां दूरतो यान्ति सम्पदः॥

२ अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥

३ अवज्ञा[2] स्फुटितं प्रेम समीकर्त्तुं क ईश्वरः।
सन्धि न याति स्फुटितं लाक्षालेपेन मौक्तिकम्॥

४ अकृत्वा परसन्तापमगत्वा खलमन्दिरम्।
अनुत्सृज्य[3] सतां वर्त्म यत्स्वल्पमपि तद् बहु॥

५ अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति॥

६ अद्यापि दुर्निवारं स्तुतिकन्या वहति कौमारम्।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते॥

७ अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति।
लोकः प्रयागवासी कूपे स्नानं समाचरति॥

---

१. दाक्षिण्यं=शीलम्। २. अवज्ञा=तिरस्कारः। ३. अनुत्सृज्य=अत्यक्त्वा।

८ अमुना मरुकूपेन के के नाम न वञ्चिताः ? ;
रुदत्पथिकनेत्राम्बुपिच्छिलप्रान्तभूमिना ॥

९ अध्वन्यध्वनि तरवः पथि पथि पथिकैरुपास्यते च्छाया ।
'विरलः स कोऽपि विटपी'[1] यमध्वगो गृहगतः स्मरति ॥

१० अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
सकलरसायनराजो गन्धेनैकेन लशुन इव ॥

११ अङ्गणवेदी वसुधा, कुल्या[2] जलधिः, स्थली च पातालम् ।
वल्मीकश्च[3] सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥

१२ आत्मायत्ते गुणग्रामे नैर्गुण्यं वचनीयता[4] ।
दैवायत्तेषु वित्तेषु पुंसां का नाम वाच्यता[5] ॥

१३ आत्माधीनशरीराणां स्वपतां निद्रया स्वया ।
कदन्नपि मर्त्यानाममृतत्वाय कल्पते ॥

१४ आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥

१५ आयुषः क्षण एकोऽपि न लभ्यः स्वर्णकोटिभिः ।
स चेद्विफलतां नीतः का नु हानिरितोऽधिका ॥

१६ आश्रयवशेन सततं गुरुता लघुता च जायते जन्तोः ।
विन्ध्ये विन्ध्यसमानाः करिणो बत दर्पणे लघवः ॥

१७ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥

१८ इह रूपमात्रसारे चित्रगते कनककल्हारे[6] ।
न रसो नापि च गन्धो मधुकरबन्धो ! मुधा भ्रमसि ।

१९ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः[7] ।
यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥

---

१. विटपी=वृक्षः । २. कुल्या=कृत्रिमाऽल्पा सरित् (नहर) । ३. वल्मीकः=उन्नतभूमिविशेषः । ४. वचनीयता=निन्दा । ५. वाच्यता=निन्दा । ६. कनककल्हारे=स्वर्णकमले । ७. अनिलः=प्राणवायुः ।

२० उपचारः[1] कर्त्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः ।
उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥

२१ एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः ।
स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥

२२ कल्याणी बत गाथेय लौकिकी प्रतिभाति मे ।
'एति जीवन्तमानन्दो नरं वर्षशतादपि' ॥

२३ कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तत्र वन्यैरन्यैर्महीरुहैः ।

२४ कल्लोलवेल्लितदृषत्परुषप्रहारै[2]—
रत्नान्यमूनि मकरालय, मावमंस्थाः ।
किङ्कौस्तुभेन भवतो विदधे न नाम
याञ्चाप्रसारितकरः पुरुषोत्तमोऽपि ? ॥

२५ कर्पूरधूलीरचितालवालः[3] कस्तूरिकापङ्कनिमग्ननालः ।
सुवर्णकुम्भैः सुधयाऽवसिक्तः प्राञ्चं गुणं मुञ्चति किं पलाण्डुः ?

२६ का हि पुङ्गणना तेषां येऽन्यशिक्षाविचक्षणाः ।
ये स्वं शिक्षयितुं शक्तास्तेषां पुङ्गणना नृणाम् ॥

२७ किंशुके शुक! मातिष्ठ चिरं भाविफलेच्छया ।
बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ? ॥

२८ कुसुमस्तवकस्येव द्वे गती स्तो मनस्विनाम् ।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येत वनेऽथवा ॥

२९ खलः करोति दुर्वृत्तं नूनं फलति साधुषु ।
रावणेन हृता सीता बन्धनं स्यान्महोदधेः ॥

३० खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥

---

१. उपचारः=सत्कारादिः, शिष्टाचारः । २. तरङ्गचलितकठोरशिलाघातैरित्यर्थः प्रथमपादस्य । ३. आलवालम्=पयोदानाय निर्मितो वृक्षाधोभागादधः स्थितो गर्त्तविशेषः ।

३१ गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः-
आस्वाद्यतोयाः[१] प्रवहन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥

३२ चलन्तु गिरयः कामं युगान्तपवनाहताः ।
[२]कृच्छ्रेऽपि न चलत्येव धीराणां निश्चितं मनः ॥

३३ जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥

३४ तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥

३५ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥

३६ न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते ।
अनाहूता न चायान्ति तेनाश्मानोऽपि देवताः ॥

३७ न ज्ञातुं नाप्यवज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
स्वजनः स्वजने जातं विपत्पातं समीहते ॥

३८ नात्यन्तं सरलैर्भाव्यं गत्वा पश्य वनस्थलीम् ।
छिद्यन्ते सरलास्तत्र कुब्जास्तिष्ठन्ति पादपाः ॥

३९ नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्त्तमानस्तु कर्तुमूलानि कृन्तति ॥

४० नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः ।
स नन्दति विना वाच्यं यो जानाति निगूहितुम् ॥

४१ निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः[३] शशिशुभ्रं शङ्खमपि पीतम् ॥

---

१. आस्वाद्यतोयाः=मधुरजलाः । २. कृच्छ्रे=कष्टे । ३. पित्तम्=एको नेत्ररोगो यस्मिन् हि सर्वमेव दृश्यमानं पीतपीतमिव प्रतीयते ।

४२ परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽयं न पुनरगुणाया[१] मरुभुवः ? ॥

४३ पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः।
हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥

४४ पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते, मूढः परप्रत्ययनेयबुद्धिः ॥

४५ प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥

४६ प्रत्यक्षकविकाव्यञ्च रूपञ्च कुलयोषितः।
गृहवैद्यस्य विद्या च कस्मै चिद्यदि रोचते ॥

४७ प्रत्यहं समवेक्षेत नरश्चरितमात्मनः।
किन्नु मे पशुभिस्तुल्यं किन्नु सत्पुरुषैरिति।

४८ भो दारिद्र्य। नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥

४९ मनो मधुकरो मेघो मानिनी मदनो मरुत्।
मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥

५० मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।
क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ ॥

५१ मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः।
रत्नैरापूरितस्यापि मदलेशोऽपि नाम्बुधेः ॥

५२ यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ?

५३ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते ध्रुवम्।
नहि कस्तूरिकामोदः शपथेन विभाव्यते ॥

---

१. अगुणाया:=ऊषराया:।

५४ यदीच्छसि वशीकर्त्तुं जगदेकेन कर्मणा।
परापवादसस्येभ्यश्चरन्तीं गां निवारय॥
५५ यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥
५६ युक्तोसि भुवनभारे मा वक्रां वितनु कन्धरां शेष!।
त्वय्येकस्मिन् दुःखिनि सुखितानि भवन्ति भुवनानि॥
५७ रविरपि न दहति तादृग् यादृक् संदहति वालुकानिकरः।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति॥
५८ लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम्।
शेषे धराभराक्रान्ते शेते नारायणः स्वयम्॥
५९ वदनं प्रसादसदनं, हृदयं सदयं सुधामुचो वाचः।
करणं परोपकरणं, येषां केषां न ते वन्द्याः?॥
६० वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः।
नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम्॥
६१ व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः।
अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः॥
६२ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः।
बुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम्॥
६३ सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥
६४ साक्षरा विपरीताश्चेद्राक्षसा एव केवलम्।
सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति॥
६५ सुलभाः पुरुषा राजन् सततं प्रियवादिनः।
अप्रियस्य च सत्यस्य वक्ता श्रोता च दुर्लभः॥

इति सूक्तिरत्नमाला।

# सुभाषितगद्यावली

१ अप्रतिभस्य पदार्थसार्थः परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव ।

२ अनियत-काला: प्रवृत्तयो विप्लवन्ते ।

३ अन्यदृष्टिचरे ह्यर्थे महाकवयो जात्यन्धास्तद्विपरीते तु दिव्यदृशः ।

४ अतिदीप्तोऽपि खद्योतो न पावकः ।

५ अग्निदाहादपि विशिष्टं वाक्पारुष्यम् ।

६ अप्रियेण कृतं प्रियमपि द्वेष्यं भवति ।

७ अतिस्नेहः पापशङ्की ।

८ अनुत्सेकः खलु विक्रमालङ्कारः ।

९ अतिरोषणश्चक्षुष्मानप्यन्ध एव जनः ।

१० अतिद्रुतवाहिनी चानित्यतानदी ।

११ अहो दुर्निवारता व्यसनोपनिपातानाम् ।

१२ अनतिक्रमणीया हि नियतिः ।

१३ अवहितं हि चित्तमर्थान्तरं पश्यति ।

१४ अभ्यासो हि कर्मणि कौशलमादधाति, नहि सकृन्निपातमात्रेणोदविन्दुरपि ग्रावणि निम्नतामादधाति ।

१५ अनिषिद्धं ह्यनुमतं भवति ।

१६ आत्मानमेव प्रतिहन्त्यनात्मवतां कोपः ।

१७ आयसैरायसश्छेद्यः ।

१८ आत्मानमात्मनाऽवसाद्यैनोद्धरन्ति सन्तः ।

१९ आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रपातीनि शुभानि निमित्तानि ।

२० आजन्म क्रमाहितो बलवान् जननीस्नेहः ।

२१ आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्ति लोकाः ।

२२ इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते ।

२३ उपयोगं तु न प्रीतिर्विचारयति ।

२४ उद्यमेन हि सिद्धयन्ति क्रिया नेच्छया केवलया ।

२५ एरण्डमवलम्ब्य कुञ्जरं न कोपयेत् ।

२६ एकार्थं हि क्रियाद्वयं द्वैगुण्याय सम्पद्यते ।

२७ क्षीरार्थिनः किं करिण्या ।

२८ छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति धर्मो मे भविष्यतीति ।

२९ जलबुद्बुदसमाना विराजमाना सम्पत्तडिल्लतेव सहसैवोदेति नश्यति च ।

३० दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति ।

३१ द्विर्बद्धं सुबद्धं भवति ।

३२ न ह्यप्रवर्तितप्रदीपास्तत्त्वार्थसार्थमभ्यक्षयन्ति ।

३३ न त्वरितस्य नक्षत्रपरीक्षा ।

३४ नाग्निमिच्छता धूमस्त्यज्यते ।

३५ न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति ।

३६ नास्त्यगतिर्मनोरथानाम् ।

३७ न कामुकः काष्ठाद् बिभेति ।

३८ नह्यलमतिनिपुणोपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम् ।

३९ नहि खल्वसाध्यं नाम भगवतो मनोभुवः ।

४० नहि शक्यं दैवमन्यथाकर्तुमभियुक्तेनापि ।

४१ न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिमभियुक्ताः ।

४२ नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्रतिभटो भवति ।

४३ नहि भवति तरक्षुः प्रतिपक्षो हरिणशावस्य ।

४४ नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न वा मृगाः सन्तीति यवा नोप्यन्ते ।

४५ नहि वरविघाताय कन्योद्वाह्यते ।
४६ नह्यागमाः सहस्रमपि घटं पटयितुमीशते ।
४७ नह्यतः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः ।
४८ न चन्द्रादातपो भवति ।
४९ नैष स्थाणोरपराधो यदेनमन्धो न पश्यति ।
५० नित्यं ह्यविज्ञातुर्विज्ञानेऽभ्यसूया ।
५१ नहि कतकं पयस इव पङ्कस्य प्रसादनाय प्रभवति ।
५२ पुत्रात्पराजयो द्वितीयं पुत्रजन्म ।
५३ प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद् बन्धनमस्ति ।
५४ परगुणवाचयमस्य मत्सरिणस्तु प्रतिभातमपि न प्रतिभातम् ।
५५ पक्षपातो हि गुणदोषौ विपर्यासयति ।
५६ प्रायः समानविद्याः परस्परयशःपुरोभागाः ।
५७ भक्षितेपि लशुने न शान्तो व्याधिः ।
५८ भुजे वीर्यं निवसति न वाचि ।
५९ मिथ्यापि तत्तथा यथा गृहीतं लोकेन ।
६० मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोति ।
६१ यादृशाकारश्चित्रकरस्तादृशमस्य चित्रम् ।
६२ यः संसदि परदोषं वक्ति स स्वदोषबहुत्वं ख्यापयति ।
६३ यवागूरपि प्राणधारणं करोति काले ।
६४ यदेव किंचनानूचानोऽभ्यूहत्यार्षं तद्भवति ।
६५ लुब्धसेवी पावकेच्छया खद्योतं धमति ।
६६ बहुभाषिणो न श्रद्दधाति लोकः ।
६७ विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते ।
६८ विषयान्तरविनिवृत्तं हि चित्तं यत्र प्रणिधीयते, तत्र गुडूचीलागं लगति ।
६९ वृश्चिकभिया पलायमानस्याशीविषमुखे दिनिपातः ।
७० सर्वनाशे समुत्पन्ने त्यजत्यर्धं विचक्षणः ।

७१ स पुनरमत्सरी ज्ञाता च विरलः ।

७२ स्वस्वविषये सर्वो गरीयान् नहि राजहंसश्चन्द्रिकापानाय प्रभवति नापि चकोरोऽङ्गच: क्षीरोद्धरणाय ।

७३ संस्कारो हि सर्वस्य गुणमुत्कर्षति, द्वादशवर्णमपि सुवर्णं पावकपाकेन हेमीभवति ।

७४ संस्कारो ह्यात्मनि समवैति न स्त्रैणं पौरुषं वा विभागमपेक्षते ।

७५ सारस्वतं हि चक्षुरवाङ्मनसगोचरेण दृष्टमदृष्टं चार्थजातं स्वयं विभजति ।

७६ सुसंस्कृतोऽपि पिचुमर्दो न सहकारः ।

७७ स्वहस्तोऽपि विषदिग्धश्छेद्यः ।

७८ स्वजनावमानो हि मनस्विनां दुःखमावहति ।

७९ सर्वः कान्तमात्मीयं पश्यति

८० स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

८१ सतां हि प्रियंवदता कुलविद्या ।

८२ सोऽयं कुरङ्गकैः कचग्रहः केसारणः ।

८३ स्थायिनि यशसि शरीरधीर्धीराणाम् ।

८४ सर्वथा न कञ्चन न स्पृशन्ति शरीरधर्माणमुपतापाः ।

८५ सर्वथा दुर्लभं यौवनमस्खलितम् ।

८६ सत्योऽयं लोकसंवादो यत्सम्पत्सम्पदं विपद् विपदमनुबध्नातीति ।

८७ सुखमुपदिश्यते परस्य ।

८८ स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत्तत् ।

८९ सेयमाकृतिर्न व्यभिचरति शीलम् ।

९० हरिणार्थमतिक्लेपणः सिंहसम्भारः ।

इति सुभाषितगद्यावली ।

# सुभाषितपद्यांशावली

१ अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ।

२ अपि स्वदेहात्किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ।

३ अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ?

४ अलोकसामान्यमचिन्त्यहेतुकं, द्विषन्ति मन्दाश्चरितं महात्मनाम् ।

५ अयथाबलमारम्भो निदानं क्षयसम्पदः ।

६ अस्तसमयेपि सतामुचितं खलूच्चतरमेव पदम् ।

७ अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा ।

८ अदोषतामेव सतां विवृण्वते, सतां मृषादोषकणाधिरोपणाः ।

९ अवश्यभव्येष्वनवग्रहग्रहा, यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते, जनस्य चित्तेन भृशावशात्मना ॥

१० अनुहुङ्कुरुते घनध्वनिं नहि गोमायुरुतानि केसरी ।

११ अन्धस्य किं हस्ततलस्थितोऽपि; प्रकाशयत्यर्थमिह प्रदीपः ।

१२ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।

१३ अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ।

१४ अकाण्डपातोपनता न कं लक्ष्मीर्विमोहयेत् ।

१५ अचिन्त्यो बत दैवेनाप्यापातः सुखदुःखयोः ।

१६ अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः ।

१७ अश्नुते स हि कल्याणं व्यसने यो न मुह्यति ।

१८ अहो दैवाभिशप्तानां प्राप्तोप्यर्थः पलायते ।

१९ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।

२० अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।

२१ अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।

२२ अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।

२३ अशक्तोहं गृहारम्भे शक्तोहं गृहभञ्जने ।

२४ अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ।

२५ अङ्कमारुह्य सुप्तानां हन्तुः किन्नाम पौरुषम् ।
२६ अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ।
२७ अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म
२८ अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे ।
२९ आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ।
३० आर्जवं हि कुटिलेषु न नीतिः ।
३१ आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया ।
३२ आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।
३३ आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि ।
३४ आदानं हि विसर्गाय सतां वारिमुचामिव ।
३५ इन्धनौघगप्यग्निस्त्विषा नात्येति पूषणम् ।
३६ उदारचरितानां तु वसुधैव कुटुम्बकम् ।
३७ उत्तरादुत्तरं वाक्यं वदतां सम्प्रजायते ।
३८ उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ।
३९ उपनतमवधीरयन्त्यभव्याः ।
४० उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
४१ ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ।
४२ क्रिया हि वस्तूपहिता प्रसीदति ।
४३ क ईप्सितार्थस्थिरनिश्चयं मनः, पयश्च निम्नाभिमुखं प्रतीपयेत्
४४ कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा,
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ।
४५ क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ।
४६ कथाऽपि खलु पापानामलमश्रेयसे यतः ।
४७ क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।
४८ कर्म कः स्वकृतमत्र न भुङ्क्ते ?
४९ कार्यं निदानाद्धि गुणानधीते ।
५० को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे ।
५१ काचः काचो मणिर्मणिः ।

५२ को हि वित्तं रहस्यं वा स्त्रीषु शक्नोति गूहितुम् ।
५३ कष्टा हि कुटिलश्वश्रूपरतन्त्रवधूस्थितिः ।
५४ कदर्याणां परे प्राणाः प्रायेण ह्यर्थसञ्चयाः ।
५५ कामं व्यसनवृक्षस्य मूलं दुर्जनसङ्गतिः ।
५६ केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ।
५७ किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
५८ खला विनैव दहनं दहन्ति जगतीतलम् ।
५९ घनाम्बुना राजपथे हि पिच्छिले, क्वचिद् बुधैरप्यपथेन गम्यते ।
६० चकास्ति योग्येन हि योग्यसङ्गमः ।
६१ जीवन्तमेव कुष्णाति काकीव कुकुटुम्बिनी ।
६२ जनानने कः करमर्पयिष्यति ।
६३ ज्ञानमार्गे ह्यहङ्कारः परिघो दुरतिक्रमः ।
६४ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
६५ ज्ञातसारोपि खल्वेकः सन्दिग्धे कार्यवस्तुनि ।
६६ जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ।
६७ तेजसां हि न वयः समीक्ष्यते ।
६८ तत्तस्य किमपि द्रव्यं, यो हि यस्य प्रियो जनः ।
६९ तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ।
७० द्विषन्मुखेपि स्वदते स्तुतिर्या, सैव प्रमाणं खलु योग्यतायाः ।
७१ दुर्जया हि विषया विदुषापि ।
७२ दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ।
७३ देवे विरुन्धति निबन्धनतां वहन्ति,
हन्त प्रयासपरुषाणि न पौरुषाणि ।
७४ धिगिमां देहभृतामसारताम् ।
७५ निर्दोहधेनुमहिमा नहि किङ्किणीभिः ।
७६ निरस्तपादपे देशे एरण्डोपि द्रुमायते ।
७७ न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ।

७८ न हीङ्गितज्ञोऽवसरेऽवसीदति ।
७९ ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः ।
८० निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ।
८१ न हि, प्रवक्तुमिच्छन्ति मृषा हितैषिणः ।
८२ न तितिक्षासममस्ति साधनम् ।
८३ न काचस्य कृते जातु युक्ता चिन्तामणेः क्षतिः ।
८४ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
८५ नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
८६ निर्वाते ज्वलितो दीपः स्वयमेव प्रशाम्यति ।
८७ न नश्यति तमो नाम कृतया दीपवार्तया ।
८८ नहि कृतमुपकारं साधवो विस्मरन्ति ।
८९ नास्ति व्यसनिनां किञ्चिद् भुवि पर्याप्तये धनम् ।
९० निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
९१ नवे हि भाजने लग्नः संस्कारो नान्यथा भवेत् ।
९२ न व्यापारशतेनापि शुकवत् पाठ्यते बकः ।
९३ नाधर्मश्चिरमेधते ।
९४ पवनः परागवाही रथ्यासु वहन् रजस्वलो भवति ।
९५ पाणौ पयसा दग्धे तक्रं फूत्कृत्य पामरः पिबति ।
९६ प्राणेभ्योपि हि धीराणां प्रिया शत्रुप्रतिक्रिया ।
९७ प्रायः शुभञ्च विदधात्यशुभञ्च जन्तोः,
सर्वङ्कषा भगवती भवितव्यतैव ।
९८ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते ।
९९ प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् ।
१०० पंके हि नभसि क्षिप्तः क्षेप्तुः पतति मूर्द्धनि ।
१०१ प्रेत्यास्मि कीदृग्भवितेति चिन्ता, सन्तापमन्तस्तनुते हि जन्तोः
१०२ परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ।
१०३ प्रेम पश्यति भयान्यपदेपि ।

१०४ प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ।
१०५ प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ।
१०६ प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ।
१०७ पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ।
१०८ पदं हि सर्वत्र गुणैर्निधीयते ।
१०९ ब्रुवते हि फलेन साधवो, न तु कण्ठेन निजोपयोगिताम् ।
११० व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
१११ बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ।
११२ बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
११३ भावो वेशो भाषा भूषा यैर्न रक्षितास्ते कुलदूषाः ।
११४ भक्ष्यमाणो निरुदयः सुमेरुरपि हीयते ।
११५ भिन्नश्लिष्टा तु या प्रीतीर्न सा स्नेहेन वर्द्धते ।
११६ भवन्ति भव्येषु हि पक्षपाताः ।
११७ भिन्नरुचिर्हि लोकः ।
११८ मा जीवन्यः परावज्ञादुःखदग्धोपि जीवति ।
११९ महीयांसः, प्रकृत्या मितभाषिणः ।
१२० मितं च सारं च वचो हि वाग्मिता ।
१२१ महान् महत्येव करोति विक्रमम् ।
१२२ याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।
१२३ यो यद् वपति बीजं हि लभते सोऽपि तत्फलम् ।
१२४ यद्भविष्यो विनश्यति ।
१२५ यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ।
१२६ रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।
१२७ वताश्रितानुरोधेन किन्न कुर्वन्ति साधवः ।
१२८ वक्ति जन्मान्तरप्रीतिं, मनः स्निह्यदकारणम् ।
१२९ विचित्ररूपाः खलु चित्तवृत्तयः ।
१३० विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।

१३१ विमलं कलुषीभवच्च चेतः, कथयत्येव हितैषिणं रिपुं वा।
१३२ विनायकं प्रकुर्वाणो रचयामास वानरम्।
१३३ श्रेयसि केन तृप्यये ?
१३४ श्रेयांसि बहुविघ्नानि।
१३५ सेवाधर्मः परमगहनो योगिनामप्यगम्यः।
१३६ स धीरो यो न सम्मोहमापत्कालेपि गच्छति।
१३७ सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते।
१३८ समानशीलव्यसनेषु सख्यम्।
१३९ सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।
१४० सदाभिमानैकधना हि मानिनः।
१४१ सर्वः स्वार्थं समीहते।
१४२ समय एव करोति बलाबलम्।
१४३ सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः।
१४४ सा लक्ष्मीरुपकुरुते यया परेषाम्।
१४५ सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
१४६ हेम्नः संलक्ष्यते वह्नौ विशुद्धिः श्यामिकापि वा।
१४७ हितं मनोहारि च दुर्लभं वचः।
१४८ हिमवति दिव्यौषधयः शीर्षे सर्पः क्रुधाविष्टः।



# पंचमः पल्लवः

## लौकिकन्याय—मञ्जरी

१ अजाकृपाणन्यायः

[ यथा कण्डूयनार्थं स्तम्भादौ ग्रीवां घर्षयन्त्या अजायास्तत्रैव स्तम्भे लम्बमानस्य खड्गस्य पातेन ग्रीवा च्छिद्यते, तथैव यत्राकस्मादनर्थ आपतेत्तत्रास्य न्यायस्यावसरः ]

२ अन्धगजन्यायः

[ यथाऽन्धानां समाजे समुपस्थित एको गजः, तेषामन्धानां मध्ये यः पुच्छदेशे तं स्पृष्टवान् तस्य मते गजः सर्प इव, यश्च शुण्डादेशे स्पृष्टवांस्तन्मते गजः स्तम्भकृतिः, यश्च कर्णभागेऽस्पृशत् तस्य बुद्धौ शूर्प इवेत्यस्ति बुद्धिभेदः, एवमेवैकस्मिन् पदार्थे अज्ञानवशाद् बुद्धिभेदे जायमानेऽस्य न्यायस्यावतारः ]

३ अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे ।

[ स्पष्टोऽस्याशयः ]

४ काकतालीयन्यायः

[ कस्याप्यर्थस्याकस्मादुपनिपातेऽस्य प्रयोगः क्रियते । 'अजाकृपाण' न्यायोप्येतद्विषय एव ]

५ कूपमण्डूकन्यायः

[ यथा मण्डूकाः कूपे तिष्ठन्तस्तावन्मात्रमेव ब्रह्माण्डं कल्पयन्ति, तथैव यस्य संकुचितं ज्ञानं तदुपहासेऽस्य न्यायस्यावसरः ]

६ घुणाक्षरन्यायः

[ यथा घुणेन काष्ठे भुज्यमाने दैववशात् किमप्यक्षरं निष्पद्यते, न च तत्र किमपि तदक्षरनिर्वृत्तौ तस्य घुणस्य गौरवं तथैव यत्र कस्यचिद-दक्षस्यापुष्कलेनापि ( फलान्तराभिसन्धिप्रवृत्तेन वा ) प्रयासेन किमपि कार्यं जन्यते तत्रास्यन्यायस्यावतारः ]

७ तुष्यतु दुर्जनन्यायः

[ यथा कस्यचित् सत्यप्रवृत्तस्यापि वक्तुः स्वप्रतिवादिनः नि-

तांशेन तोषाय तदुक्तिविषये ध्यानदानं जायते, तथैव वस्तुनोऽनिच्छायामपि तत्तोषमात्रधिया प्रवृत्तावस्यावसरः ]

८ पङ्कप्रक्षालनन्यायः

[ 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इत्येवास्याशयाः ]

९ अरण्यरोदनन्यायः

[ यथाऽरण्ये वर्त्तमानः कोपि रुदन् कस्यापि हृदयं स्वविषयकदयाभावोदयार्द्रं विधातुं न प्रभवति तथैव वृथा प्रयासस्थलेऽस्य न्यायस्य प्रयोगः अत्रैवाशये 'भस्मन्याज्याहुतिन्यायः' प्रयुज्यते, प्रचलितप्रयोगाश्चायमपि न्यायः ]

१० पिष्टपेषणन्यायः

[ जातेऽपि कार्ये तत्सिद्ध्यनुकूलकार्यानुष्ठानस्थलेऽस्य प्रयोगं कुर्वते बुधाः ]

११ सूचीकटाहन्यायः

[ यथा केनचित्सूची कटाहं च निर्मातुमिच्छता लाघवादरेण प्रथमं कटाहनिर्माणे प्रवृत्यते, तथैव गुरुलघुभावतया लघुनि कार्ये प्रवृत्तिरस्य न्यायस्यावसरमुपस्थापयति ]

१२ स्थालीपुलाकन्यायः

[ यथा स्थालीगतास्तण्डुलाः पक्वा न वेति सन्देहे निश्चयाय प्रवत्तमानस्ततः स्थाल्यास्तण्डुलद्वितयं तत्त्रितयं वा भूमौ निधाय तदीयसिद्धत्वासिद्धत्वे पाणिना परीक्ष्य तदनुसारेण समस्तमपि स्थालीगतं तण्डुलप्रकरं सिद्धमसिद्धं वा निश्चिनोति, तथाविध एव विषयेऽस्यावसरः ]

१३ फलवत्सहकारन्यायः

[ यथा आम्रे फलोपभोगाय रोप्यमाणे छायासुगन्धौ विना पृथक् प्रयत्नमेवोत्पद्येते, तथैव कस्यापि कार्यस्य अपृथग्यत्ननिर्वर्त्त्यतायामस्य प्रयोगः ]

१४ कण्ठचामीकरन्यायः

[ चामीकरं–सुवर्णम्, यथा कण्ठगतं हेमभूषणं स्थानान्तरे न्यस्तं पतितं वोत्प्रेक्षमाणस्तदन्वेषणाय व्यग्रतां प्रदर्शयेत्तथैवात्मरूपतया

ङ्गणि प्राप्तेऽपि तदुपायानुसन्धाने प्रवृत्तिरस्य न्यायस्य प्रयोगस्थानम् ]

१ तृणजलौकन्यायः

[ यथा तृणजलौकाः तृणान्तरमाश्रित्यैव पूर्वतनं तृणं त्यजति तथैव रमाश्रयमाप्यैव पूर्वस्थानत्यागेऽस्य न्यायस्यावतारः ]

१ स्थूणानिखननन्यायः

[ यथाऽसकृत्सञ्चाल्य निखाता स्थूणा स्थिरा भवति तथैव ज्ञातोऽर्थो यत्र पुनः पुनः संदिह्य दृढीक्रियते तत्रैवास्य प्रयोगः ]

७ सिंहावलोकनन्यायः

[ यथा सिंहः कश्चिन्मृगं हत्वाऽग्रे गच्छन्नन्योऽपि चेत्स्यात्तमपि यामिति धिया पश्चादवलोकते, यथा बुद्धिपथागतस्वप्रतिपक्षिकल्पितक्तिनिरासाय यत्रोत्तरग्रन्थस्यावतारस्तत्रास्यावसरः ]

८ गड्डलिकाप्रवाहन्यायः

[ यथा मेषीणां गणादेका मेषी यद्यस्मात्कूपे पतति तदा वार्यणा अप्यपराः कूपे पतितुमारभन्ते, तथैव कारणाविमर्शेन कार्ये प्रवृावस्योपयोगः ]

९ रेखागवयन्यायः

[ यथा केनचिद् ग्रामीणेन पृष्टो वन्यः 'कीदृशो गवय' इति स तं ऽखित्वा दर्शयति गवयोऽयमिति स चर्जुबुद्धित्वाद्रेखां गवयं मन्यमानः श्चाद्वनङ्गत्वा तत्र च गवयं वीक्ष्य रेखायां गवयधियं मुञ्चति, तद्वदसत्यधान्तेन कस्यचित् सत्यार्थप्रतिपादनेऽस्यावसरः ]

१० मण्डूकतोलनन्यायः

[ यथा मण्डूकतोलने प्रक्रम्यमाणे तुलास्था मण्डूकास्तुलात त्प्लुत्य पलायन्ते तोलनं च निरुध्यते, तथैवातिव्यर्थकार्यप्रवृत्तौ प्रसङोऽस्य न्यायस्य ]

११ कीटभृङ्गन्यायः

[ यथा कीटो भ्रमरेण गृह्यमाणो भ्रमरमनुध्यायन् कालेन भ्रमरत्वमापद्यते तथा संसर्गप्रभावाद् गुणसङ्क्रमस्थलेऽस्य न्यायस्य प्रसारः ]

२२ नीरक्षीरन्यायः

[ हंसो हि पयसि चञ्चुं न्यस्य जलं पयसः पृथक्करोति तथैव सत्यासत्यप्रविवेकेऽस्य न्यायस्यावसरः

२३ सुन्दोपसुन्दन्यायः

[ अन्योऽन्यनाश्यनाशकभावविवक्षायां प्रवृत्तिरस्य न्यायस्य एवं हि श्रूयते पुरा तिलोत्तमानामकवेश्यार्थं सुन्दोपसुन्दनामानौ सहोदरौ दैत्यौ परस्परं विरोध्य अन्योन्यखड्गप्रहारेण च्छिन्नशिरस्कौ बभूवतुरिति )

२४ नष्टाश्वदग्धरथन्यायः

[ एकं कार्यमुद्दिश्य प्रवर्त्तमानौ द्वौ पुरुषौ स्तस्तयोरुभयोरपि साधनं कियत्यंशे न्यूनमिवासीत्, मिलित्वा चोभयोः साधनसामग्री पूर्णतां गताऽभूदस्यैव स्थाने न्यायोऽयं प्रयुज्यते । न्यायस्यास्यायमितिहासः- द्वौ रथिनौ कश्चिद् ग्रामं प्रविश्य स्वाभ्यां रथाभ्यामवतीर्याश्वांस्ताभ्यां मोचयित्वा विश्रमितुं प्रवृत्तौ । दैवाज्जातेऽग्निकाण्डे तयोरेकस्य दग्धो रथोऽपरस्य चाश्वो बन्धनमुन्मोच्य पलाय्य च नष्टः । एवं द्वावपि विरथौ बभूवतुः । ततश्च परस्परं मन्त्रयित्वा रथमश्वं चैकत्रोपयुज्य स्वं देशं प्रत्यावृत्तौ' ]

२५ मत्स्यन्यायः

[ प्रबला मत्स्या अबलान्मत्स्यानदन्ति, तथा व्यवहारेऽस्य प्रवृत्तिः, तथा च नैषधीये—'अबलस्वकुलाशिनो झषान्' । योगवासिष्ठेऽपि—

एतावताऽथ कालेन तद्रसातलमण्डलम् ।
बभूवाराजकं तीक्ष्णं मात्स्यन्यायकदर्थितम् ॥ ]

२६ धान्यपलालन्यायः

[ हेयपदार्थोपादानमन्तरा यत्रोपादेयोपादानमपि दुष्करं तत्र हेयमप्युपादायोपादेयमाददति, पश्चाच्च हेयं निरस्यन्ति, तत्रैवास्यावसरः, तथा च स्मर्यते—

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः' ॥ ( पञ्चदशी ) ]

२७ देहलीदीपन्यायः

[ यथा देहल्यां निहितेन दीपेन गृहे बहिश्च प्रकाशकार्यं सम्पाद्यते, तथा यत्र प्रयासेनैकेन कार्यद्वये तुल्य उपकार आधीयते तत्रास्यावसरः । अत्रैव चावसरे 'मध्यमणिन्यायः' 'काकाक्षिगोलन्यायः' इति वा व्यवह्रियते ]

२८ लूतातन्तुन्यायः

[ यथा लूता स्वयं निर्माति तन्तूंस्तैरेव च तथा बध्यते यथा स्वान् प्राणानपि विपादयति, यथैव स्वकृतकर्मणाऽऽपदुपनिपातेऽस्यावसरः ]

२९ गुडश्लेष्मन्यायः

[ यथा गुडः श्लेष्माणं वर्द्धयित्वा पश्चात्तं शमयति, तथा यत्र विश्वासमुत्पाद्य प्रहारः क्रियते तत्रास्य व्यवहारविषयः ]

३० कुञ्जरस्नानन्यायः

[ यथा हस्ती सद्यः स्नात्वा परावर्त्तमानो मध्येयार्गं शिरसि रजः शुण्डादण्डेन किरति तथा स्वच्छं कर्म कृत्वा पुनरतित्वरितमेव यदा मलिनं कर्म कर्त्तुमारभते तदाऽयं न्यायोऽवतार्यते ]

एते न्यायः स्वरूपतः प्रयोगविषयतश्चात्र निरूपिताः, एतदधिका न्याया यद्यपि स्मृतिपथमधिरोहन्ति, परन्तेषां मध्ये कतिपये शास्त्रीयतत्त्वप्रतिपादन एव लभन्तेऽवसरं, कतिपये शास्त्रीयेण विषयेण सह लौकिकेऽपि व्यवहारे प्रयुज्यमाना अपि प्रयोगविषयस्य वैरल्येन नात्र सङ्गृहीताः, यथा 'स्नुषाश्वश्रून्यायः' 'कपिञ्जलाधिकरणन्यायः' इत्यादयः । किञ्च प्रबन्धविषये उपयोक्ष्यमाणा एव न्याया अत्र निवेषिताः, प्रबन्धेषु च भाषाप्रवाहान्तःपातिनि सरसवाक्यावलीवीचौ त एव न्यायः प्रयोगमर्हन्ति, येऽतिप्रचलिताः, अर्थतः सुबोधाश्च । इतोऽपि हेतोर्बहवो न्याया नोपन्यस्ताः । अत्र विषयेऽधिकं जिज्ञासुभिरेतद्विषये ग्रन्थान्तरेषु गवेषणीयम् ।

इति पं० रामचन्द्रमिश्रकृते प्रबन्धपारिजाते पञ्चमः पल्लवः ।

समाप्तश्चायं ग्रन्थः ।

# ग्रन्थकर्तुः परिचयः

'माण्डर' संज्ञकमैथिलभूसुरवंशेऽजनिष्ट कृती ।
श्रीमान् 'कन्हाइ' मिश्रो हृतजनताऽज्ञानतामिस्र ॥ १ ॥

उदित 'रछीतन' शर्मा ततः सुमेरोरिवादित्यः ।
योऽमानि मानिनिवहश्रेयान् सुकृतावदातात्मा ॥ २ ॥

मृतपितृकः स हि बाल्ये मातुलकुलमाश्रितः शरणम् ।
ग्रामे 'पकडी' नाम्नि गृहस्थतां प्रापितो न्यवसत् ॥ ३ ॥

तत्तनयेषु प्रथमो वयसा ज्ञानेन यशसा च ।
'मधुसूदन' मिश्राख्यो भक्तश्चतुराग्रणीरभवत् ॥ ४ ॥

तत एव श्री 'जयमणि' संज्ञायां मातरि प्रापम् ।
जनिमब्धिरामवसुभूमितशाके 'रामचन्द्रो'ऽहम् ॥ ५ ॥

प्रभवाष्टमशरदि स्नेहान्मामुपनिनीषन्तम् ।
तातं सदा स्वतन्त्रा नियतिरकार्षीत्कथाशेषम् ॥ ६ ॥

बाल्ये पण्डित भिङ्गुरशर्म कृपाप्राप्तबोधस्य ।
अथ चक्षुषी चमत्कृतसंस्कृतभाषाप्रयोगेषु ॥ ७ ॥

उन्मीलिते अभूतां श्रीश्रीनाथाख्य-विबुधस्य ।
मम मातुलस्य चरणौ निषेवमाणस्य न चिरेण ॥ ८ ॥

गूढं शास्त्ररहस्यं ज्ञातुं निखिलं निबद्धकक्षस्य ।
उपदेशको ममाभू 'दीश्वरनाथो' विदद्वन्द्यः ॥ ९ ॥

स्वाभाविक्या कृपया स्नेहेनान्तःप्ररूढेन ।
ममतादृशा च यो मामपुषत्सोदर्यभावेन ॥ १० ॥

तत्कृपयाधिगताखिलसंस्कृतसाहित्यमर्माणम् ।
बुधवर 'किशोरिशर्मा' मां व्याधताचार्यपदभाजम् ॥ ११ ॥

श्रीयुत 'जटेश्वर' भिधावद्वद्वरपादमुपजीव्य ।
दर्शनशास्त्ररहस्यं नचिरेणाशेषमाचकलम् ॥ १२ ॥

एतानन्यांश्च गुरून्मनसि ममावस्थितान्सततम् ।
ध्यायामि यत्कृपा मे मानुष्यकमञ्जसाऽत्राचीत् ॥ १३ ॥

द्वात्रिंशद्वर्षवयः-समविगताध्यापनावसरः ।
अध्यापयामि दर्शनशब्दालङ्कारशास्त्राणि ॥ १४ ॥

सोऽहं 'प्रसन्नराघव' टीकावरजं निबन्धममुम् ।
निरमामिह विद्वांस कृपास्पृशं स्वां दृश दद्युः ॥ १५ ॥